राजा। स्वैरं स्वैरं गच्छन्तु भवत्यः। आश्रमबाधा यथा न भवति, तथाहमपि यतिष्ये (१)। (ख)

सख्यौ। महाभाअ! विदिदभूइट्ठोसि। सम्पदं उवआरमज्झत्थदाए अवरद्ध म्ह; तं मरिसेहि, असम्भाविदसक्कारं भूओ वि पच्चवेक्खणणिमित्तं अज्जं विण्णवेम्ह (२)। (ग)

(ग) महाभाग! विदितभूयिष्ठोऽसि। साम्प्रतमुपचारमध्यस्थतया अपराद्धाः स्मः; तन्मर्षय, असम्भावितसत्कारं भूयोऽपि प्रत्यवेक्षणनिमित्तमार्य्यं विज्ञापयामः।

मेवाव्ययं विस्मयविषादसूचकम्, तस्यातिशये द्विरुक्तिः। एकस्मिन् स्थाने बहुकालं यावदेकभावेनावस्थाने रक्तादीनां गमनागमनबन्धात् अङ्गानां स्तम्भो भवतीति सर्वेषामेवानुभवविषयः। शकुन्तलाया अपि तथैकभावेनोपवेशनात् ऊरुस्तम्भ इति बोध्यम्। ऊरुस्तम्भेन विह्वला व्याकुला। इतः शीघ्रगमनमावश्यकम्, इतश्च ऊरुस्तम्भात् चरणौ न चलतीति द्वैतीरिति भावः।

(ख) राजेति। स्वैरं स्वैरं मन्दं मन्दम्। तथा च इदानीमपि द्रुतगमनं प्रति न किञ्चित् कारणमुपस्थितमिति भावः। तत्र हेतुमाह आश्रमेति।

"मन्दस्वच्छन्दयोः स्वैर"मित्यमरः।

(ग) सख्याविति। महान् भागो भाग्यं यस्य तत्सम्बोधनम्। विदितमवगतं

(क) শকুন্তলা। (গতিরোধ অভিনয় করিয়া) হায়! হায়! ঊরুস্তম্ভবশতঃ আমি বিহ্বলা হইয়াছি।

(খ) রাজা। আপনারা ধীরে ধীরে গমন করুন। যাহাতে আশ্রমের ক্ষতি না হয়, আমিও সেইভাবে চেষ্টা করিব।

(१) राजा। अलम् मम्। गच्छन्तु भवत्यः। वयमप्याश्रमपीड़ा यथा न भवति, तथा प्रयतिष्यामहे। सर्वे उत्तिष्ठन्ति।

(२) सख्यौ। अज्ज! असम्भाविदअदिहिसक्कारा भूओ पेक्खणणिमित्तं लज्जेमो विण्णविदुं।

राजा । मा मैवम् । दर्शनेनैव भवतीनां सम्भूत-सत्कारोऽस्मि (१) । (घ)

शकु । हल्ला अणसूए ! अहिणव-कुस-सूइ-परिक्खद मे चलणं, कुरुवअ-साहा-परिलग्गं च वक्कलं, दाव परिवालेध मं जाव णं मोआवेमि । इति राजानमवलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता । (ङ)

---

भूयिष्ठं बहुलम् अस्माकमाचारमनोभावादियेन सः । एतेन शकुन्तलाया अपि मनो-भावावगमात् पुनरपि तवागमनमावश्यकमेवेति सूचितम् । उपचारे भवतः सत्कारे मध्यस्थतया उदासीनतया, अपराद्धाः अपराधिन्यः स्मो वयमिति शेषः ; अवश्यकर्त्तव्या-करणादिति भावः । तत् अपराद्धत्वम्, मर्षय क्षमस्व । असम्भावितः अस्माभिरनिष्पादितः सत्कारः सेवा यस्य सः । अतएव भूयः पुनरपि प्रत्यवेक्षणनिमित्तं सन्दर्शनार्थम् । दर्शनदानाय सत्कारलाभाय च भवता पुनरप्यवागन्तव्यमिति प्रार्थयाम इति तात्पर्य्यम् ।

(घ) राजेति । एवम् असम्भावितसत्कारत्वम्, मा मा न खलु न खलु जातमिति शेषः । तत्र हेतुमाह दर्शनेनैवेत्यादि । सम्भूतसत्कारः सञ्जातसत्कारः । तथा च प्रीतिकरो व्यापारो नाम सत्कारः । तेन च भवतीनां दर्शनेन ईदृशी मे प्रीतिः कृता, यथा व्यापारान्तरेण तादृशी कर्त्तुं न शक्यते । एवञ्च सत्काराकरणात् यदप-राद्धत्वमात्मनामुद्घोषितं तदपि न जातमित्याशयः ।

---

(গ) সখীদ্বয় । মহাশয় ! বহুতর জানিয়াছেন । আপনার সেবায় ঔদাসীন্য করায় এখন আমরা অপরাধী হইয়াছি ; তা ক্ষমা করুন । আপনার সেবা করা হয় নাই বলিয়া আবারও দর্শনদানের জন্য আপনাকে জানাইতেছি ।

(ঘ) রাজা । না না ; এরূপ হয় নাই । আপনাদের দর্শনেই আমার সৎকার হইয়াছে ।

---

(१)···भवतीनां पुरस्कृतोऽस्मि ।

राजा । निश्वस्य । गताः सर्वाः । भवतु, अहमपि गच्छामि शकुन्तलादर्शनादेव मन्दौत्सुक्योऽस्मि नगरगमनं प्रति । यावदनुयात्रिकान्नतिदूरे तपोवनस्य निवेशयामि । न खलु शक्नोऽस्मि शकुन्तलादर्शनव्यापारादात्मानं निवर्त्तयितुम् । मम हि—(१) (च)

(क) हला अनसूये ! अभिनव कुश-सूचि-परिक्षतं मे चरणम्, कुरुवक-शाखा-परिलग्नञ्च वल्कलम् । तावत् प्रतिपालयत मां, यावदेनं मोचयामि ।

(ङ) शकु इति । अभिनवस्य कुशस्य सूच्या अग्रभागेन परिक्षतम् । वल्कलञ्च परिहितवल्कलञ्च, कुरुवकस्य वृक्षविशेषस्य शाखायां परिलग्नम् असावधानतया संसक्तम् । प्रतिपालयतं प्रतीक्षेथाम् । एनं वल्कलम । व्याजेन वल्कलमोचनच्छलेन सहितं सव्याजम । एतेन राजानं प्रति महाननुरागो व्यज्यते ।

अतएवात्र अनुरागरूपस्य वीजस्य पुनरुत्पत्तेरुद्भेदो नाम मुखसन्धेरङ्गम्—"वीजार्थस्य प्ररोहः स्यादुद्भेदः" इति लक्षणात् ।

(च) राजेति । भवतु सर्वासामेव गमनमिति शेषः । अत्र तु निवारणोपाय एव नास्तीति भावः । अहमपि गच्छामि, अत्रावस्थानस्य निष्फलत्वादित्याशयः । मन्द-मन्दीभूतम औत्सुक्यमुद्योगो यस्य सः, नगरगमनं प्रति राजधान्यां गमनविषये अत्रावस्थाने

(ङ) শকুন্তলা। ওলো অনসূয়া! নূতন কুশাগ্রে আমার চরণ ক্ষত হইয়াছে এবং বল্কলখানি কুরুবকশাখায় লাগিয়া পড়িয়াছে; তা আমার জন্য প্রতীক্ষা কর, যাবৎ ইহা মুক্ত করি। (এই বলিয়া রাজাকে দেখিতে দেখিতে কপটতাবশতঃ বিলম্ব করিয়া, সখীদ্বয়ের সহিত চলিয়া গেল।)

(१) राजा । मन्दौत्सुक्योऽस्मि नगरगमनं प्रति । यावदनुयात्रिकान् समेत्य नातिदूरेव तपोवनस्य निवेशयेयम् । न खलु शक्नोमि शकुन्तलाव्यापारादात्मानं निवर्त्तयितुम् । मम हि ।

गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥३६॥

यदि शकुन्तलां लभेयमित्याशयेत्यभिप्रायः। यावत् सर्वान्। "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः। अनुयात्रिकान् अनुचरान्। निवेशयामि स्थापयामि; आश्रमबाधानिवृत्त्यर्थमिति भावः।

अतएवात्र करणं नाम मुखसन्धेरङ्गम्—"करणं पुनः। प्रकृतार्थसमारम्भः" इति लक्षणात्।

पुनरनुरागावस्थां व्यनक्ति न खल्विति। आत्मानं मनः। अनुरागाकर्षणस्य दुर्निवारत्वादित्याशयः।

गच्छतीति। ममेति प्रागुक्तमत्रान्वेति। तथा च मम शरीरम्, पुरः अग्रतो गच्छति, तपोवनस्यातिदूरे अनुयात्रिकाणां निवेशनार्थमिति भावः। किन्तु, प्रतिवातं वायोः प्रतिकूलं वाताभिमुखं यथा स्यात्तथा, नीयमानस्य केतोर्ध्वजस्य, चीनांशुकम् उपरिबद्धं राङ्कवं वस्त्रमिव तत्पताकेवेत्यर्थः, असंस्थितम् अस्थिरं चञ्चलमिति यावत्, चेतश्चित्तम्, पश्चाद्दिशि धावति वेगेन गच्छति; शकुन्तलारूपादिभिः समाकर्षणादित्याशयः। यथा ध्वजदण्डे वाताभिमुखं नीयमाने, तदीयपताका वायुना पश्चाद्दिशि चाल्यते; तथा शरीरे अनुयात्रिकाभिमुखं नीयमानेऽपि मनः शकुन्तलानुरागेण तां प्रति पश्चाद्दिशि चाल्यत इति सरलार्थः।

अत्र श्रौतोपमालङ्कारः। गच्छति पुरः शरीरमित्यनन्तरं सामर्थ्यादेव किन्त्वर्थावगमो भवतीति तदनुक्तावपि न न्यूनपदत्वदोषः "क्वचिन्न दोषो न गुणः" इति दर्पणाभिधानात्।

(চ) রাজা। (নিশ্বাস ত্যাগ করিয়া) সকলেই গেল। হউক, আমিও যাই। শকুন্তলার দর্শনবশতই রাজধানীতে যাইতে মন্দোৎসাহ হইয়াছি। অনুচরদিগকে তপোবনের অতিদূরে সংস্থাপিত করি। শকুন্তলার দর্শনব্যাপার হইতে আপনাকে নিবৃত্ত করিতে সমর্থ হইতেছি না। কারণ—

ইতি নিষ্ক্রান্তাঃ সর্ব্বে (১)। (ছ)

## প্রথমোঽঙ্কঃ ॥০॥ (জ)

"চীনো দেশে মৃগে তন্তুষু। স্ত্রী তু বস্ত্রে" ইতি হেমচন্দ্রঃ। তেন চ চীননির্ম্মিতমংশুকং চীনাংশুকম্ ইতি মধ্যপদলোপী সমাসঃ।

আর্য্যা জাতিঃ ॥৩৬॥

(ছ) ইতীতি। ইতি ইত্যুক্তঃ পরম্। রাজ্ঞঃ কেচন শরীররক্ষিণ আসন্নেবেতি মন্তব্যম্, তে চ তদানীং দূরে অবস্থিতাঃ, তৈঃ সহ রাজ্ঞো বহুত্বাৎ বহুবচনং সর্ব্বশব্দোপাদানঞ্চ সঙ্গচ্ছতে।

পূর্ব্বং শকুন্তলাদীনাম্ ইদানীঞ্চ রাজ্ঞঃ প্রস্থানেন সংহতিভেদনাৎ ভেদো নাম মুখসন্ধ্যঙ্গম্—"ভেদঃ সংহতিভেদনম্" ইতি দর্পণলক্ষণাৎ।

(জ) প্রথম ইতি। অঙ্কঃ পরিচ্ছেদঃ সমাপ্ত ইতি শেষঃ।

"প্রত্যক্ষনেতৃচরিত" ইত্যাদি "অন্তনিষ্ক্রান্তনিখিলপাত্রোঽঙ্কঃ" ইত্যন্তমঙ্কলক্ষণং সাহিত্যদর্পণে অনুসন্ধেয়ম্।

"অঙ্কঃ স্থানেঽন্তিকে মন্তৌ রূপকাংশসমুল্লসম্। নাটকাদিপরিচ্ছেদে চিহ্নযুদ্ধে চ ভূষণে॥" ইতি বিশ্বঃ। এবমন্যত্রাপি বোধ্যম্।

ইতি মহামহোপাধ্যায়-ভারতাচার্য্য শ্রীহরিদাসসিদ্ধান্তবাগীশভট্টাচার্য্যবিরচিতায়াম্
অভিজ্ঞানশকুন্তলটীকায়ামভিজ্ঞানকৌমুদ্যাং প্রথমাঙ্কবিবরণং
সমাপ্তম্ ॥০॥

---

যেমন বায়ুর প্রতিকূলে ধ্বজ সঞ্চালিত করিলে, তাহার পতাকা পিছনের দিকে যায়, সেইরূপ আমার শরীর সম্মুখে যাইতেছে; কিন্তু অস্থির চিত্ত পিছনের দিক্ দৌড়াইতেছে ॥৩৬॥

(ছ) (ইহার পর সকলেই চলিয়া গেল।)

### (জ) প্রথম অঙ্ক ॥০॥

---

(১) ক্বচিৎ ইতিশব্দো নাস্তি।

# द्वितीयोऽङ्कः ।

—०:*:०—

ततः प्रविशति विदूषकः (१) । (क)

(क) तत इति । शृङ्गारिनायकस्य सहायविशेषो विदूषकः । तथा च साहित्यदर्पणे—

"शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः ।
भक्ता नर्म्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः ॥"

विदूषकस्य लक्षणमपि तत्रैव । यथा—

"कुसुमवसन्ताद्यभिधः कर्म्मवपुर्वेशभाषाद्यैः ।
हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्म्मज्ञः ॥"

इतः प्रभृति तृतीयाङ्गत-'पृष्टा जनेन समदुःखसुखेन बाला' इत्यादिश्लोकात् पूर्वपर्य्यन्तः प्रतिमुखसन्धिः । तथा चात्र शकुन्तलासम्मेलनरूपफलप्राप्तौ अतित्वरान्वितभावेन राज्ञो दुष्मन्तस्य शकुन्तलान्वेषणात्मकव्यापाररूपः प्रयत्नो नाम द्वितीया कार्य्यावस्था निबद्धा । यथा तत्रैव—

"प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः ।"

एवं शकुन्तलादुष्मन्तयोः सम्मेलनरूपफलस्य प्रधानोपायभूतो यस्तयोः परस्परानुरागो मुखसन्धौ निविष्टः, तस्यात्र "कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि" इत्यादिना दुष्मन्ते लक्ष्यतया उद्भेदः ; शकुन्तलायान्तु स्पष्टानभिधानात् अवस्थया सूचितत्वाच्च अलक्ष्य इव उद्भेदः कविना सन्दर्शितः । यथा तत्रैव—

"फलप्रधानोपायस्य मुखसन्धिनिवेशिनः ।
लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तत् ॥"

अत्र तु विलासादीनि त्रयोदश अङ्गानि यथास्थानं निवेश्य लक्षणानि वक्ष्यामः ।

---

(क) তদনন্তর বিদূষকের প্রবেশ ।

---

(१) विषण्णो विदूषकः ।

विदू। निश्वस्य। भो! हदोह्मि (१) एदस्स मिअआसीलस्स रसो वअस्सभावेण णिव्विस्सो (२) अअं मिओ, अअं वराहो, अअं सद्दूलो त्ति मज्झन्दिणेवि गिह्मे विरलपादवच्छाआसुं वणराइसुं आहिण्डिअ पत्तसङ्करकसाअविरसाइं उण्हकडुआइं पिज्जन्ति गिरिणईसलिलाइं (३) (ख)।

(ख) भोः! हतोऽस्मि एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णः। अयं मृगः, अयं वराहः, अयं शार्दूल इति मध्यन्दिनेऽपि ग्रीष्मे विरलपादपच्छायासु वनराजिषु आहिण्ड्य पत्रसङ्करकषायविरसानि उष्णकटुकानि पीयन्ते गिरिनदी-

(ख) विदू इति। भो इति विषादसूचकमव्ययम्। "भोस्तु सम्बोधनविषादयोः" इति मेदिनी। वयस्यभावेन सख्येन। निर्विण्णः प्राप्तनिर्वेदो दुःखित इति यावत्। तत्कारणमाह अयमित्यादि। दिनस्य मध्यमिति मध्यन्दिनम् "धेन्वनडुहादयश्च" इति निपातः। ग्रीष्मे ग्रीष्मकाले मध्यन्दिनेऽपि मध्याह्नेऽपि। एतेन तापाधिक्यं सूचितम्। विरला अन्तरान्तरातपयुक्ताः पादपानां वृक्षाणां छाया यासु तासु, वनराजिषु वनश्रेणिषु, आहिण्ड्य विचर्य्य। "हिडि गतौ" इत्यस्य ल्यप्प्रत्ययप्रयोगः। पत्राणां नानाजातीयवृक्षपर्णानां सङ्करेण सम्मिश्रणेन कषायाणि सनिर्य्यासानि अतएव विरसानि कुस्वादानि, तथा उष्णानि च तानि आतपतापादिति भावः कटुकानि अल्पकटुरसानि चेति तानि, गिरिनदीसलिलानि पर्व्वतप्रस्रवणजलानि पीयन्ते। अन्येषां सुस्वादुजलानामलाभात् दुष्टजलपानस्य च गुरुतरक्लेशजनकत्वात् निर्विण्ण इति भावः।

कषायविरसानि उष्णकटुकानीति च "प्रसन्नकर्कशा भारती" "भाष्यं प्रसन्नगम्भीरम्" इत्यादिवत् परपदस्य विशेषत्वविवक्षया कर्म्मधारयः। कटुकेति अल्पार्थे कप्रत्ययः।

(ख) विदूषक। (निश्वास त्याग करिया) हाय! मारा गেলাম এই মৃগয়াসক্ত রাজার বয়স্যরূপে কষ্ট ভোগ করিয়া। গ্রীষ্মকালে বেলা

(१) दिट्ट। (२) णिव्विण्णो म्हि (३) मज्झण्णेवि। गिम्हविरलपाअवच्छाआसु वणराइसु आहिण्डीअदि कडुआइं णिरिणईजलाइं पीअन्ति।

अणिअदवेलम्म उसोसम संभूइट्ठं भुञ्जीअदि (१) (ग)। तुरअ-गआणां च सद्देण रत्तिं पि मे णत्थि पकामसुइदव्वं (२) (घ)। महन्ते ज्जेव पच्चू से दासीए पुत्तेहिं साउणिअलुद्धेहिं कण्णोप-घादिणा वणगमणकोलाहलेण पडिवोधिदम्हि (ङ)। एत्ति-

सलिलानि। (ग) अनियतवेलञ्च उष्णोष्णमांसभूयिष्ठं भुज्यते। (घ) तुरगगजानाञ्च शब्देन रात्रावपि मे नास्ति प्रकामशयितव्यम्। महत्येव प्रत्यूषे दास्याः पुत्रैः शाकुनिक-लुब्धैः कर्णोपघातिना वनगमनकोलाहलेन प्रतिबोधितोऽस्मि। (ङ) एतावतापि मे

(ग) अनियतेति। अनियता अनिर्द्दिष्टा वेला कालो यस्मिन् कर्म्मणि तद्यथा तथा; आपेक्षिकसुविधया कदाचित् पूर्व्वाह्णे कदाचित् मध्याह्ने कदाचिदपराह्ण इत्यर्थः, उष्णोष्णानि शैत्यसम्पादनावसराभावात् अत्युष्णानि मांसान्येव भूयिष्ठानि बहुलानि यस्मिन् तत्। एतेन चिराभ्यस्तभोजनाभावात् महत् दुःखं सूचितम्।

(घ) तुरगेति। किञ्चेति चार्थः। रात्रावपि तुरगगजानां सैन्यान्तर्गतघोटक-हस्तिनाम्, शब्देन कण्ठध्वनिना प्रकामशयितव्यं यथेष्टनिद्रा। सुष्ठु निद्राभावेनापि गुरुतरं दुःखमिति भावः।

(ङ) ननु प्रायेण प्रभाते हस्तिघोटकादीनां शब्दनिवृत्तिदर्शनात् तत्रैव प्रकामं

দুপুরের সময়েও এই হরিণ, এই শূকর এবং এই বাঘ এই করিয়া বনশ্রেণীর ভিতরে বিচরণ করিতে হয়; তাহাতে গাছের ছায়া কমই পাওয়া যায়; তাহাতে আবার পার্ব্বত্যনদীর যে জল পান করা হয়, সেগুলি গাছের পাতা পড়ায় কসও বিরস এবং রৌদ্রের তাপে গরম, আর স্বভাবতই কটু। (গ) তার পর অনির্দ্দিষ্ট সময়ে খাইতে হয়, সে খাদ্যের মধ্যে আবার গরম গরম মাংসই বেশী। (ঘ) এদিকে রাত্রিতেও যে একটু ইচ্ছামত ঘুমাইব তাহাও হাতী-ঘোড়ার শব্দে

(१) अणिअदवेलं सुल्लभ संभूइट्ठो आहारो अण्हीअइ।

(२) तुरगाणुधावणकण्डिदसन्धिणो रत्तिम्मि णिकामं सइदव्वं णत्थि।

केण वि मे पीड़ा ण संवुत्ता ; जदो अग्गं गण्डस्स उवरि विप्फोड़ओ संवुत्तो (१) (च)। तेण ह्वि किल अम्हेसु अवहीणेसु तत्थभअदा मिआणुसारिणा अस्समपदं पविट्ठेण मम अधम्मदाए सउन्तला णाम कावि तवस्सिकण्णआ दिट्ठा, तं पेक्खिअ सम्पदं णअरगमणस्स कथम्पि ण करेदि (२) (छ)।

पीड़ा न सहत्ता, यतः अयं गण्डस्य उपरि विस्फोटकः सहत्तः। (च) तेन हि किल अस्मासु अवहीनेषु तत्रभवता मृगानुसारिणा आश्रमपदं प्रविष्टेन मम अधन्यतया शकुन्तलया

शय्यतामित्याह महत्येवेति। महत्येव प्रत्यूषे प्रत्यूषकाले दास्याः पुत्रैर्नितान्तनीचैः, शाकुनिकलुब्धैः पक्षिहसकव्याधैः कर्तृभिः, कर्णोपघातिना कर्कशत्वात् कर्णपीड़ाजनकेन, वनगमने तत्काले कोलाहलेन करणेन, प्रतिबोधितो जागरितः। तत् कुतः प्रभातेऽपि निद्रेति भावः।

शकुनान् पक्षिणो हिंसन्तीति शाकुनिकाः, ते च ते लुब्धाश्चेति शाकुनिकलुब्धाः। "व्याधो मृगवधाजीवी मृगयुर्लुब्धकोऽपि सः" इत्यमरः।

(च) उक्ताधिकमपि दुःखमाह एतावतेति। एतत्परिमाणेनापि असुविधासमूहेनेत्यर्थः। पीडा असह्यदुःखम्, संवृत्ता सञ्जाता। गण्डस्य कपोलस्य। विस्फोटकः नितान्तपीडाकारी व्रणविशेषः, संवृत्तः सञ्जातः। तेनैवासह्यं दुःखं जातमिति भावः।

পারি না। (ঙ) তার পর অতিপ্রত্যূষেই বাঁদীর পো পাখীমারা ব্যাধগুলির বনগমনকালের কর্ণপীড়াজনক কোলাহলে জাগিয়া উঠি। (চ) এততেও আমার সেরূপ কষ্ট হয় নাই। কিন্তু যে হেতু গালের উপরে এই একটা বিস্ফোটক হইয়াছে, সেই জন্যই অসহ্য কষ্ট হইতেছে।

(१) एत्तएण दाणिं वि पीड़ा ण णिक्कमइ। तदो गण्डस्स उवरि पिण्डआ संवुत्ता।

(२) हिओ किल अम्हेसु ओहीणेसु तत्तहोदो मिआणुसारेण अस्समपदं पविट्ठस्स तावसकण्णआ सउन्तला णाम मम अधण्णदाए दंसिदा। संपदं णअरगमणस्स मणं कहं वि ण करइ।

एवं ज्जेव चिन्तअन्तस्स मे पहादा अच्छिसु रअणी, का गदी। जाव णं किदआआरपरिग्गहं पिअवअस्सं पेक्खामि (१) (ज)। परिक्रम्यावलोक्य च। एसो बाणासणहत्थो हिअअ-णिहिद-पिअ-

नाम कापि तपस्विकन्यका दृष्टा, तां प्रेक्ष्य साम्प्रतं नगरगमनस्य कथामपि न करोति। (छ) एवमेव चिन्तयतः मे प्रभाता अक्ष्णोः रजनी, का गतिः। यावदेनं कृताचारपरिग्रहं प्रियवयस्यं प्रेक्षे। (ज) एष बाणासनहस्तः हृदयनिहितप्रियजनः,

(छ) दुःखान्तरमाह तेनेति। तेन उक्तविधेन दुःखप्रवाहेण पीड्यमानेष्वित्यर्थः, अवहीनेषु वेगेन राज्ञो गमनात् पश्चात् स्थितेषु सत्स्विति तात्पर्य्यम्, तत्रभवता मान-नीयेन राज्ञा, मृगानुसारिणा मृगस्य पश्चात् धावता, आश्रमपदं तपोवनम्, प्रविष्टेन सता। अधन्यतया पुण्यशून्यतया मन्दभाग्यतयेत्यर्थः। कथामपि प्रस्तावमपि। ततश्च शीघ्रशान्तिलाभोपायोऽपि नास्तीत्याशयः।

(ज) एवमिति। एवमेव इत्थमेव, चिन्तयतः शयित्वैव भावयतः। अक्ष्णो-श्चक्षुषोरपि, रजनी प्रभाता, बहिरालोकप्रसरणात् बहिः सर्वथैव प्रभाता, शयनकुञ्जे-ऽप्यालोकागमनात् चक्षुषोरपि प्रभातेत्यर्थः, का गतिः शान्तिलाभे क उपायः, अपि तु कापि नास्तीत्यर्थः। कृत आचारपरिग्रहः मृगयोचितवेशधारणं येन तम्।

(छ) তাহাতে আবার রাজা, আমাকে পিছনে ফেলিয়া, অত্যন্তবেগে একটা হরিণের অনুসরণ করিতে করিতে, তপোবনে প্রবেশ করিয়া, আমারই দুরদৃষ্টবশতঃ শকুন্তলা নামে কোনও তপস্বিকন্যাকে দেখিয়াছেন; তাহাকে দেখিয়া এখন আর বাড়ী যাওয়ার নামও করেন না। (জ) শয়ন করিয়া এইরূপই কেবল চিন্তা করিতেছিলাম, এই অবস্থায় আমার চোখে রাত পোহাইয়া গিয়াছে; তা উপায় কি? যাহা হউক, মৃগয়াবেশধারী প্রিয়সখার সহিতই সাক্ষাৎ করি। (ঝ) (পদক্ষেপ-

(१) अज्जवि तस्स तं एव्वं चिन्तअन्तस्स अच्छीसु पहादं आसि...किदाआर-परिक्कमं (किददारपरिग्गहं)।

अयो वणपुप्फमालाहारी इदो ज्जेव आअच्छदि पिअवअस्सो (१) (झ)। भोदु, अङ्ग-भङ्ग-विअलो भविअ चिट्ठिस्सं। एव्वम्पि णाम विस्सामं लहेअं (२)। इति दण्डकाष्ठमवलम्ब्य स्थितः। (ञ)

ततः प्रविशति यथानिर्द्दिष्टो राजा (३)। (ट)

वनपुष्पमालाधारी इत एव आगच्छति प्रियवयस्यः। (झ) भवतु, अङ्गभङ्गविकलो भूत्वा स्थास्यामि। एवमपि नाम विश्रामं लभेय।

(झ) परीति। परिक्रम्य कियन्तं पदक्षेपं कृत्वा। बाणान् अस्यति क्षिपत्यनेनेति बाणासनं धनुः हस्ते यस्य सः, हृदये निहितः स्थापितः प्रियजनः शकुन्तलेति तात्पर्य्यं यस्य सः, प्रियां शकुन्तलां चिन्तयन्नित्यर्थः। एतत्तु नयनभङ्ग्यादिना अनुमितमिति बोध्यम्।

(ञ) भवत्विति। भवतु पुनरपि मृगानुधावनादिप्रस्ताव इति शेषः। अङ्गानां कटिदेशप्रभृत्यवयवानां भङ्गेन अस्वास्थ्यव्यञ्जककौटिल्यकरणेन विकलः अस्वाभाविकावस्थः। एवमपि अङ्गभङ्गविकलभाविनावस्थानेनापि। नाम सम्भावयामि। ईदृगवस्थानदर्शनात् अस्वास्थ्यानुमानेन मां प्रति राज्ञो विश्रामानुमतिदानस्यैव सर्वथा सम्भवादिति भावः। दण्डकाष्ठं काष्ठमयं दण्डम्।

(ट) तत इति। यथानिर्द्दिष्टः बाणासनहस्तादिरूपः।

---

পূর্ব্বক দর্শন করিয়া ) এই যে বনপুষ্পমালাধারী প্রিয়বয়স্য, মনে মনে প্রিয়জনের চিন্তা করতঃ, ধনু হাতে করিয়া এই দিকেই আসিতেছেন। (ঞ) হউক, অঙ্গ-ভঙ্গ-বিকল হইয়া থাকি। দেখি ইহাতেও যদি বিশ্রাম লাভ করিতে পারি। ( এই বলিয়া যষ্টি অবলম্বন করিয়া থাকিল। )

(१) बाणासणहत्थाहिं जवणीहिं वणपुप्फमालाधारिणीहिं परिवुदो···।

(२)···विस्समिस्स···। अह एव्वं वि। (३)·· यथानिर्द्दिष्टपरिवारो राजा।

राजा । आत्मगतम् (१) ।

काम' प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि (२) ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥१॥

काममिति । प्रिया शकुन्तला, काम' यथेष्टम्, न सुलभा अत्यनायासलभ्या न कथञ्चिदायासेन लभ्या तु स्यादित्यर्थः । तथा च मां प्रति तस्या अनुरागे सत्यपि पराधीनतया आत्मदानासम्भवात् न अत्यनायासलभ्या, सख्यादिभिर्मत्कुलशीलावस्थादि-वर्णनेन कण्वादीनां तत्प्रभूणां सम्मतिसम्भवात् कियदायासलभ्या तु स्यादेवेति भावः । तु किन्तु, मनो मम चित्तम्, तस्याः शकुन्तलाया भावदर्शनेन अनुरागव्यञ्जकाकस्मिकदृष्ट्या-द्यवलोकनेन आश्वसिति तत्प्राप्तिसम्भावनाजनितानन्दमनुभवतीति तत् तथोक्त' जातमिति शेषः । ननु लिप्सिताया असुलभत्वे कथमाश्वासानन्द इत्याह अकृतार्थेऽपीति । मनसिजे कामे, अकृतार्थेऽपि तत्फलीभूतसुरतसुखानुत्पत्त्या अचरितार्थे सत्यपि, उभयप्रार्थना नायकनायिकयोः परस्परप्राप्त्याकाङ्क्षा, रति' सम्भाव्यमान' सम्भोगानन्दम्, कुरुते जनयति । अतएव च मम मनस्तद्भावदर्शनाश्वासि जातमेवेत्याशयः ।

अत्र परार्द्धसामान्येन पूर्वार्द्धविशेषसमर्थनादर्थान्तरन्यासोऽलङ्कारः, तथा अप्रस्तुतात् नायकनायिकात्मकोभयसामान्यात् प्रस्तुतयोर्दुष्मन्तशकुन्तलारूपयोर्विशेषनायकनायिकयोः प्रतीतेरप्रस्तुतप्रशंसा च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः ।

तथात्र शकुन्तलायां दुष्मन्तस्य समीहाकरणात् विलासो नाम प्रतिमुखसन्धेरङ्गम् । यथा साहित्यदर्पणे—

"समीहा रतिभोगार्थी विलास इति कथ्यते ।"

इदमेव तत्रोदाहृत' द्रष्टव्यम् । आर्य्या जातिः ॥१॥

(ট) (তাহার পর নির্দ্দিষ্টরূপে রাজার প্রবেশ ।)

রাজা । (স্বগত) প্রিয়তমা শকুন্তলা একেবারে সুলভ নহে; কিন্তু তথাপি আমার মন তাহার অবস্থা দেখিয়া আশ্বস্ত হইয়াছে ।

(১) क्वचित् आत्मगतमिति नास्ति । (२) तद्भावदर्शनायासि ।

स्मितं कृत्वा । एवमात्माभिप्रायसम्भावितेष्टजनचित्तवृत्तिः प्रार्थयिता विप्रलभ्यते (१) । कुतः—(२) (ठ)

स्निग्धं वीक्षितमन्यतोऽपि नयने यत् प्रेरयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।
मा गा इत्युपरुद्धया यदपि तत्सासूयमुक्ता सखी,
सर्व्वं तत् किल मत्परायणमहो कामः (३) स्वतां पश्यति ॥२॥

(ठ) स्मितमिति । स्मितम् आत्मनो भ्रान्तत्वसूचकं मन्दहास्यं कृत्वेत्यर्थः । आत्मनो भ्रान्तत्वमेव व्यनक्ति एवमिति । एवम् अनेन प्रकारेण अहमिवेत्यर्थः, आत्माभिप्रायेण निजमनोवृत्तेरानुरूप्येणेति तात्पर्य्यम्, सम्भाविता निरूपिता इष्टजनस्य नायकस्य नायिकाया वा चित्तवृत्तिर्मनोभावो येन सः, प्रार्थयिता कामयिता जनः, विप्रलभ्यते प्रतार्य्यते । तथा च कश्चिज्जनो जनान्तरस्य भावविशेषमभिलक्ष्य "मयि खल्वयमनुरक्तः" इत्येवं मन्यमानो यदा तस्मिन् प्रसक्तुमुपक्रमते, तदा तु तद्भावस्य विषयान्तरगततया स्वाभाविकतया वा स खल्विष्टजनः प्रकुप्यति उदास्ते उपहसति वा । तेन च स जन इष्टजनेन प्रतारित एव भवतीति सरलार्थः । इत्थञ्च तेषां शकुन्तलाभावानां विषयान्तरगतत्वेनापि सम्भवात् मयाहं प्रतारित एव भवामीति भावः । ननु आत्माभिप्रायेण आत्मविषये तादृशी इष्टजनचित्तवृत्तिः कथं सम्भाविता, यत् एवमित्यादि सामान्यमुपन्यस्तमित्याह कुत इति ।

स्निग्धमिति । तया शकुन्तलया, नयने नेत्रद्वयम् अन्यतः अन्यस्मिन् वस्तुनि,

---

তাহার কারণ এই যে, কাম চরিতার্থ না হইলেও, নায়ক-নায়িকার পরস্পরের প্রার্থনা, পরস্পরের আনন্দ জন্মাইয়া থাকে ॥১॥

(ঠ) (ঈষৎ হাস্য করিয়া) নিজের মনোবৃত্তি অনুসারে যিনি ইষ্টজনের মনোবৃত্তি স্থির করেন, সেই প্রার্থী ব্যক্তি এইরূপই প্রতারিত হন। কারণ—

---

(१) विडम्ब्यते । (२) क्वचित् कुत इति नास्ति । (३) कामी ।

विदू। तथास्थित एव। भो महाराअ! ण मे हत्थो पसरदि, ता वाआमेत्तेण जआवीअसि। जअदु जअदु भवं (१)। (ङ)

प्रेरयन्त्यापि प्रकाश्यभावेन निक्षिपन्त्यापि, स्निग्धं सानुरागम्, यत् वीक्षितं गोपनीयभावेन ताराद्वयं सञ्चाल्य मयि दृष्टिपातः कृतः; नितम्बयोर्गुरुतया स्थूलत्वेन भारवत्तया, विलासादिव मयि विभ्रमं प्रदर्श्येव, यत् मन्दं यातम् अल्पमल्पं गमनं कृतम्; तथा मा गा न गच्छ इति इत्थम्, उपरुद्धया प्रियंवदाकर्तृकमनुरुद्धया सत्या शकुन्तलया सखी प्रियंवदा, यदपि तत् "दाणिं किं तुह आअच्छिम्हि" इत्यादिपूर्वोक्तप्रकारम्, सासूयं सेर्ष्यं यथा स्यात्तथा, उक्ता। तत् सर्वम्, अहमेव परम् अयनम् आश्रयो विषयो यस्य तत् मात्परायणम्, किल सम्भावयामीत्यर्थः। अहो आश्चर्यम्, कामः कामावेशः, स्वतां परविषयाणामपि भावानामात्मविषयताम्, पश्यति उत्प्रेक्षते सम्भावयतीत्यर्थः। तथा च तेषां शकुन्तलाभावानां पदार्थान्तरविषयकतायाः स्वाभाविकताया वा सम्भवेऽपि यन्मया मद्विषयकत्वं सम्भावितम्, एतदेव मे भ्रान्तत्वम्। तेन च यदेवाहं तद्दर्शेन तस्यां प्रसक्तुं प्रवर्त्तिष्ये तदैव तया प्रकुप्यन्त्या उदासीनया उपहसन्त्या वा सत्या प्रतारणीय इति भावः।

अत्र कामः स्वतां पश्यतीति सामान्येन पूर्वविशेषसमर्थनादर्थान्तरन्यासोऽलङ्कारः।

"वार्त्तासम्भाव्ययोः किल" इत्यमरः। शार्दूलविक्रीड़ितं वृत्तम् ॥२॥

---

শকুন্তলা অন্যদিকে নয়নযুগল নিক্ষেপ করিয়াও যে অনুরাগের সহিত দৃষ্টিপাত করিয়াছেন এবং আমাকে বিলাসভাব দেখাইবার জন্যই যেন নিতম্বযুগলের ভারবশতঃ যে অল্প অল্প গমন করিয়াছেন, আর "যাইও না" এইরূপ উপরোধ করিলে পর, অসূয়ার সহিত সখীকে সেই যাহা কিছু বলিয়াছেন, সে সমস্ত আমার বিষয়ে (করিয়াছেন)। কি আশ্চর্য্য! কাম পরবিষয়ক ব্যাপারকেও স্ববিষয়ক বলিয়া মনে করে ॥২॥

(१)···हत्थपाआ पसरन्ति···जीआवइस्सं।

राजा। विलोक्य सस्मितम् (१)। कुतोऽयं गात्रोपघातः। (ढ)

विदू। कधं कुदो त्ति, सअं ज्जेव अच्छिं भञ्जिअ अस्सुकारणं पुच्छसि (२)। (ण)

---

(ड) भो महाराज! न मे हस्तः प्रसरति, तत् वाचामात्रेण जाप्यसे। जयतु जयतु भवान्।

(ण) कथं कुत इति, स्वयमेव अक्षि भङ्क्त्वा अश्रुकारणं पृच्छसि।

---

(ड) विदू इति। दण्डकाष्ठमवलम्ब्य वक्रभावेन स्थित एव। प्रसरति आशीर्वादाय उत्थानावश्यकत्वेऽपि उत्थातुं न शक्नोमि गात्रोपघातादिति भावः। तत् तस्मात्, वाचामात्रेण केवलेन वाक्येन, न पुनर्हस्तस्याप्युत्तोलनेनेत्यर्थः, जाप्यसे जयपार्थीक्रियसे।

वाचेति वाक्शब्दात् टाप्। तथा च—

"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।

टापञ्चापि हलन्तानां यथा वाचा निशा गिरा॥"

जाप्यस इति जयन् प्रयुज्यत इति इनि "क्रिजिक्रीङामिनि" इति जेरिकारस्य आकारः "अर्त्तिह्री" इत्यादिना पकारागमश्च।

(ढ) राजेति। कुतः कारणात्। गात्रोपघातः अङ्गवैकल्यम्।

---

(ড) বিদূষক। (সেইভাবে থাকিয়াই) মহারাজ! আমার হাত চলিতেছে না; তাই কেবল বাক্যদ্বারা আপনার সংবর্দ্ধনা করিতেছি। আপনার জয় হউক, আপনার জয় হউক।

(ঢ) রাজা। (দেখিয়া ঈষৎ হাস্যের সহিত) তোমার এই অঙ্গ বৈকল্য হইল কেন?।

(ণ) বিদূষক। নিজেই চোখে আঘাত করিয়া—'চোখের জল পড়িতেছে কেন?' ইহা জিজ্ঞাসা করিতেছ কি জন্য?।

---

(१) क्वचित् विलोक्य सस्मितमिति नास्ति।

(२) क्वचित् किल सयं अच्छी आउलीकरिअ।

राजा। न खल्ववगच्छामि, भिन्नार्थमभिधीयताम् (१)। (त)

विदू। जं वेदसो खुज्जस्स लीलं विड़म्बेदि, तं किं अत्तणो पहावेण? अधवा णईवेअस्स? (२)। (थ)

राजा। नदीवेगस्तत्र कारणम्। (द)

विदू। मम वि भवं। (ध)

---

(थ) यत् वेतसः कुब्जस्य लीलां विड़म्बयति, तत् किम् आत्मनः प्रभावेण? अथवा नदीवेगस्य?।

(ध) ममापि भवान्।

---

(ण) विदू इति। अयि भङ्क्त्वा नयनमुपमर्द्य, कुत इति कथमिदमस्तु? इत्यम् अस्रुणः निर्गतस्य तन्नयनजलस्य कारणम्, कथं पृच्छसीत्यन्वयः। भवानेव मम तद्‌गात्रोपघातस्य कारणमित्याशयः।

(त) राजेति। अवगच्छामि तव वाक्यार्थमिति शेषः। भिन्नः शक्त्या व्यङ्ग्यार्थात् पृथक् कृतः अर्थो यस्य तत् भिन्नार्थं स्पष्टार्थं वाक्यमित्यर्थः।

(थ) विदू इति। वेतसः स्वनामख्यातो लताविशेषः, यत् कुब्जस्य जनस्य, लीलां क्रियां कुब्जभावमित्यर्थः, विड़म्बयति अनुकरोति, तत्कुब्जलीलाविड़म्बनम्, प्रभावेण शक्त्या। नदीवेगस्य प्रभावेणेति सम्बन्धः।

(द) राजेति। अत्र कुब्जलीलाविड़म्बने। तथा च नदीवेग एव वेतसं कुब्जं करोति, स्वयन्तु स सरल एवेत्यर्थः।

---

(त) রাজা। বুঝিতে পারিলাম না। স্পষ্ট করিয়া বল।

(থ) বিদূষক। বেত যে কুব্জলোকের অবস্থার অনুকরণ করে, সে কি নিজের শক্তিতে? না—নদীবেগের শক্তিতে?।

(দ) রাজা। সে বিষয়ে নদীর বেগই কারণ।

---

(१) क्वचित् भिन्नार्थमभिधीयताम् इति नास्ति।

(२) भो वअस्स!···खुज्जलीलं··· वा णईवेअस्स।

राजा । कथमिव ? । (न)

विदू । जुत्तं णाम एव्वं, जं तुए रज्जकज्जाइं उज्झिअ तादिसं अक्खलिदपदं पदेसं च वणचलवित्तिणा होदव्वं त्ति । किं एत्थ मन्तीअदु, अहं वह्मणो पच्चहं सापदाणुसरणेहिं संक्खोहिदसन्धिवन्धणाणं अत्तणो अङ्गाणं अणीसोह्मि । ता पसीद मे, एक्काहम्मि दाव विसमीअदु (१) । (प)

(प) युक्तं नाम एवम्, यत् त्वया राजकार्य्याणि उज्झित्वा तादृशं अस्खलितपदं प्रदेशञ्च वनचरवृत्तिना भवितव्यमिति । किमत्र मन्त्र्यताम्, अहं पुनर्ब्राह्मणः प्रत्यहं श्वापदानुसरणैः संक्षोभितसन्धिबन्धनानामङ्गानामनीशोऽस्मि । तत् प्रसीद मे, एकाहमपि तावद्विश्रम्यताम् ।

---

(ध) विदू इति । तद्वत् ममापि गात्रोपघाते भवान् कारणमित्यर्थः ।

(न) राजेति । कथमिव तव गात्रोपघाते अहं कारणमित्यर्थः ।

(प) विदू इति । एवं भवतश्चरित्रम्, युक्तं नाम सङ्गतं सम्भाव्यते, "उपकृतं बहु तत्र किमुच्यते" इत्यादिवद्विपरीतलक्षणया अतीवायुक्तं सम्भाव्यत इत्यर्थः किन्त्वदित्याह यदिति । उज्झित्वा परित्यज्य । न स्खलितं न प्रच्युतं पदं त्राणं यस्मिन् तं सर्वदैव रक्षोपायसम्पन्नमित्यर्थः प्रदेशं राजधानीञ्च, उज्झित्वेत्यन्वयः, वनचरस्य सततवनविचरणशीलस्य व्याधस्य वृत्तिरिव वृत्तिर्व्यवहारो यस्य तेन तादृशेन भवितव्यं त्वयेति शेषः । तथा च पालनात्मकं राजकार्य्यं विहाय यत् हिंसात्मिका मृगया

---

(ध) বিদূষক। আমারও তুমি।

(ন) রাজা। কি রকম ?।

---

(१) एव्वं रायकज्जाइं उज्झिय एआरिसे आउलप्पदेसे वणचरवुत्तिणा तुए होदव्वं । जं अहं पच्चहं सावदसमुच्छारणेहिं संखोहिअसन्धिवन्धणाणं मम गत्ताणं अणीसोह्मि संवुत्तो । तापसादइस्सं विसज्जिदुं मं एक्काहं वि विस्समिदुं ।

राजा। आत्मगतम्। अयमेवमाह, ममापि कण्वसुता-मनुस्मृत्य मृगयां प्रति निरुत्सुकं चेतः। तथाहि—(१) (फ)

क्रियते, यत्र सर्वथा निरापदं राजधानीं परित्यज्य नानाविपत्सङ्कुले वने विचर्य्यते, तदतीवायुक्तमित्याशयः।

"पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः।

नन्वास्तां तावत् तत् सर्वमयुक्तम्, तथापि तव गात्रोपघाते कथमहं कारणमिति मत्प्रश्नस्य भवतः किमुत्तरमित्याह किमिति। अत्र भवत्प्रश्ने, किं मन्नातां मया उत्तरं दीयतां स्वयं चिन्तामात्रेणैव ज्ञातव्यत्वात् मदुत्तरस्य कापि नापेक्षास्तीत्यर्थः। परन्तु स्पष्टमाह अहमिति। युतां कुक्कुराणामापदो येभ्यस्ते श्वापदा हिंस्रजन्तवो व्याघ्रादयः तेषामनुसरणैः भवद्भिः सार्द्धं पश्चात् पश्चात् धावनैः संक्षोभितानि सञ्चालितानि सन्धिबन्धनानि संयोगस्थानस्थबन्धा येषां तेषाम् अङ्गानां हस्तपदादीनाम् अनीशः सञ्चालनादौ असमर्थः; गुरुतरवेदनानुभवादित्यर्थः। अतएव श्वापदानुसरणे मां प्रत्यनुमतिकरणेन मम गात्रोपघाते भवानेव कारणमिति भावः।

(फ) राजेति। कण्वसुतां शकुन्तलाम्, अनुस्मृत्य चिन्तयित्वा चिन्तया मृगैः सह शकुन्तलायाः सम्पर्कोऽस्तीत्यवधार्य्य।

---

(প) বিদূষক। ইহা সঙ্গতই হইতেছে যে; তুমি রাজ্যের কার্য্য এবং সেইরূপ নিরাপদস্থান পরিত্যাগ করিয়া, একেবারে ব্যাধবৃত্তি হইয়াছ। আমি তোমার এ প্রশ্নের কি উত্তর দিব; আমি ব্রাহ্মণ হইয়া প্রতিদিন হিংস্রজন্তুর অনুসরণ করিতেছি; তাহাতে আমার প্রত্যেক সন্ধিস্থানের বন্ধনগুলি, স্থানভ্রষ্ট হইয়াছে; সুতরাং আমি নিজের অঙ্গ সঞ্চালন করিতে পারিতেছি না। অতএব আমার প্রতি প্রসন্ন হও; একটী দিনের জন্যও বিশ্রাম কর।

(१) स्वगतम्। अयं चैवमाह। ममापि काश्यपसुतामनुस्मृत्य मृगयाविक्लवं चेतः। कुतः।

राजा। विलोक्य सस्मितम् (१)। कुतोऽयं गात्रोपघातः। (ढ)

विदू। कधं कुदो त्ति, सअं ज्जेव अच्छिं भञ्जिअ अस्सुकारणं पुच्छसि (२)। (ण)

(ड) भो महाराज! न मे हस्तः प्रसरति, तत् वाचामात्रेण जाप्यसे। जयतु जयतु भवान्।

(ण) कथं कुत इति, स्वयमेव अक्षि भङ्क्त्वा अश्रुकारणं पृच्छसि।

(ड) विदू इति। दण्डकाष्ठमवलम्ब्य वक्रभावेन स्थित एव। प्रसरति आशीर्वादाय उत्थानावश्यकत्वेऽपि उत्थातुं न शक्नोमि गात्रोपघातादिति भावः। तत् तस्मात्, वाचामात्रेण केवलेन वाक्येन, न पुनर्हस्तस्याप्युत्तोलनेनेत्यर्थः, जाप्यसे जयपार्थीक्रियसे।

वाचेति वाक्शब्दात् टाप्। तथा च—

"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।
टापञ्चापि हलन्तानां यथा वाचा निशा गिरा॥"

जाप्यस इति जयन् प्रयुज्यत इति इनि "क्रिजिक्रीङामिनि" इति ञेरिकारस्य आकारः "अर्त्तिह्री" इत्यादिना पकारागमश्च।

(ढ) राजेति। कुतः कारणात्। गात्रोपघातः अङ्गवैकल्यम्।

(ড) বিদূষক। (সেইভাবে থাকিয়াই) মহারাজ! আমার হাত চলিতেছে না; তাই কেবল বাক্যদ্বারা আপনার সংবর্দ্ধনা করিতেছি। আপনার জয় হউক, আপনার জয় হউক।

(ঢ) রাজা। (দেখিয়া ঈষৎ হাস্যের সহিত) তোমার এই অঙ্গ বৈকল্য হইল কেন?।

(ণ) বিদূষক। নিজেই চোখে আঘাত করিয়া—'চোখের জল পড়িতেছে কেন?' ইহা জিজ্ঞাসা করিতেছ কি জন্য?।

(१) क्वचित् विलोक्य सस्मितमिति नास्ति।

(२) कुदो क्खिल सव्वं अच्छी आउलीकरिय।

राजा। न खल्ववगच्छामि, भिन्नार्थमभिधीयताम् (१)। (त)

विदू। जं वेदसो खुज्जस्स लीलं विड़म्बेदि, तं किं अत्तणो पहावेण? अधवा णईवेअस्स? (२)। (थ)

राजा। नदीवेगस्तत्र कारणम्। (द)

विदू। मम वि भवं। (ध)

(थ) यत् वेतसः कुब्जस्य लीलां विड़म्बयति, तत् किम् आत्मनः प्रभावेण? अथवा नदीवेगस्य?।

(ध) ममापि भवान्।

(ण) विदू इति। अयि भङ्क्त्वा नयनमुपमर्द्य, कुत इति कथमिदमश्रु? इत्यम् अश्रुणः निर्गतस्य तन्नयनजलस्य कारणम्, कथं पृच्छसीत्यन्वयः। भवानेव मम तद्गात्रोपघातस्य कारणमित्याशयः।

(त) राजेति। अवगच्छामि तव वाक्यार्थमिति शेषः। भिन्नः शक्त्या व्यक्तार्थात् पृथक् कृतः अर्थो यस्य तत् भिन्नार्थं स्पष्टार्थं वाक्यमित्यर्थः।

(थ) विदू इति। वेतसः स्वनामख्याता लताविशेषः, यत् कुब्जस्य जनस्य, लीलां क्रियां कुब्जभावमित्यर्थः, विड़म्बयति अनुकरोति, तत्कुब्जलीलाविड़म्बनम्, प्रभावेण शक्त्या। नदीवेगस्य प्रभावेणेति सम्बन्धः।

(द) राजेति। अत्र कुब्जलीलाविड़म्बने। तथा च नदीवेग एव वेतसं कुब्जं करोति, स्वयन्तु स सरल एवेत्यर्थः।

(ত) রাজা। বুঝিতে পারিলাম না। স্পষ্ট করিয়া বল।

(থ) বিদূষক। বেত যে কুব্জলোকের অবস্থার অনুকরণ করে, সে কি নিজের শক্তিতে? না—নদীবেগের শক্তিতে?।

(দ) রাজা। সে বিষয়ে নদীর বেগই কারণ।

(१) क्वचित् भिन्नार्थमभिधीयताम् इति नास्ति।

(२) भो वअस्स!··· खुज्जलीलं··· णं णईवेअस्स।

राजा। कथमिव ?। (न)

विदू। जुत्तं णाम एव्वं, जं तुए रज्जकज्जाइं उज्झिअ तादिसं अक्खलिदपदं पदेसं च वणचरवित्तिणा होदव्वं त्ति। किं एत्थ मन्तीअदु, अहं वह्मणो पच्चहं सापदाणुसरणेहिं संक्खोहिदसन्धिवन्धणाणं अत्तणो अङ्गाणं अणीसोह्मि। ता पसीद मे, एक्काहम्मि दाव विसमीअदु (१)। (प)

(प) युक्तं नाम एवम्, यत् त्वया राजकार्य्याणि उज्झित्वा तादृशं अस्खलितपदं प्रदेशञ्च वनचरवृत्तिना भवितव्यमिति। किमत्र मन्त्र्यताम्, अहं पुनर्ब्राह्मणः प्रत्यहं श्वापदानुसरणैः संक्षोभितसन्धिबन्धनानामङ्गानामनीशोऽस्मि। तत् प्रसीद मे, एकाहमपि तावद्विश्रम्यताम्।

(ध) विदू इति। तद्वत् ममापि गात्रोपघाते भवान् कारणमित्यर्थः।

(न) राजेति। कथमिव तव गात्रोपघाते अहं कारणमित्यर्थः।

(प) विदू इति। एवं भवतश्चरित्रम्, युक्तं नाम सङ्गतं सम्भाव्यते, "उपकृतं बहु तत्र किमुच्यते" इत्यादिवद्विपरीतलक्षणया अतीवायुक्तं सम्भाव्यत इत्यर्थः किन्त्वदित्याह यदिति। उज्झित्वा परित्यज्य। न स्खलितं न प्रच्युतं पदं वाणं यस्मिन् तं सर्वदैव रक्षोपायसम्पन्नमित्यर्थः प्रदेशं राजधानीञ्च, उज्झित्वेत्यन्वयः, वनचरस्य सततवनविचरणशीलस्य व्याधस्य वृत्तिरिव वृत्तिर्व्यवहारो यस्य तेन तादृशेन भवितव्यं त्वयेति शेषः। तथा च पालनात्मकं राजकार्य्यं विहाय यत् हिंसात्मिका मृगया

(ধ) বিদূষক। আমারও তুমি।

(ন) রাজা। কি রকম ?।

(१) एव्वं राअकज्जाइं उज्झिअ एआरिसे आउलपदेसे वणचरवुत्तिणा तुए होदव्वं। जं सव्वं पच्चहं सावदसमुच्छारणेहिं संखोहिअसन्धिवन्धणाणं मम गत्ताणं अणीसोह्मि संवुत्तो। तापसादइस्सं विसज्जिदुं मं एक्काहं वि विस्समिदुं।

राजा। आत्मगतम्। अयमेवमाह, ममापि कण्वसुता-मनुस्मृत्य मृगयां प्रति निरुत्सुकं चेतः। तथाहि—(१) (फ)

क्रियते, यत्र सर्वथा निरापदं राजधानीं परित्यज्य नानाविपत्सङ्कुले वने विचर्य्यते, तदतीवायुक्तमित्याशयः।

"पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः।

नन्वास्तां तावत् तत् सर्वमयुक्तम्, तथापि तव गात्रोपघाते कथमहं कारणमिति मत्प्रश्नस्य भवतः किमुत्तरमित्याह किमिति। अत्र भवत्प्रश्ने, किं मन्त्रात् मया उत्तरं दीयतां स्वयं चिन्तामात्रेणैव ज्ञातव्यत्वात् मदुत्तरस्य कापि नापेक्षास्तीत्यर्थः। परन्तु स्पष्टमाह अहमिति। युनां कुक्कुराणामापदौ येभ्यस्ते श्वापदा हिंस्रजन्तवो व्याघ्रादयः तेषामनुसरणैः भवद्भिः सार्द्धं पश्चात् पश्चात् धावनैः संक्षोभितानि सञ्चालितानि सन्धिबन्धनानि संयोगस्थानस्थबन्धा येषां तेषाम् अङ्गानां हस्तपदादीनाम् अनीशः सञ्चालनादौ असमर्थः; गुरुतरवेदनानुभवादित्यर्थः। अतएव श्वापदानुसरणे मां प्रत्यनुमतिकरणेन मम गात्रोपघाते भवानेव कारणमिति भावः।

(फ) राजेति। कण्वसुतां शकुन्तलाम्, अनुस्मृत्य चिन्तयित्वा चिन्तया मृगैः सह शकुन्तलायाः सम्पर्कोऽस्तीत्यवधार्य्य।

(গ) বিদূষক। ইহা সঙ্গতই হইতেছে যে; তুমি রাজ্যের কার্য্য এবং সেইরূপ নিরাপদস্থান পরিত্যাগ করিয়া, একেবারে ব্যাধবৃত্তি হইয়াছ। আমি তোমার এ প্রশ্নের কি উত্তর দিব; আমি ব্রাহ্মণ হইয়া প্রতিদিন হিংস্রজন্তুর অনুসরণ করিতেছি; তাহাতে আমার প্রত্যেক সন্ধিস্থানের বন্ধনগুলি, স্থানভ্রষ্ট হইয়াছে; সুতরাং আমি নিজের অঙ্গ সঞ্চালন করিতে পারিতেছি না। অতএব আমার প্রতি প্রসন্ন হও; একটী দিনের জন্যও বিশ্রাম কর।

(१) स्वगतम्। अयं चैवमाह। ममापि काश्यपसुतामनुस्मृत्य मृगयाविक्लवं चेतः। कुतः।

न नमयितुमधिज्यमुत्सहिष्ये (१)
धनुरिदमाहितसायकं मृगेषु ।
सहवसतिमुपेत्य यैः प्रियायाः
कृत इव लोचनकान्तिसंविभागः ॥३॥

नेति । अध्यारूढ़ा ज्या गुणो यत्र तदधिज्यम्, तथा आहितः चेपणाय स्थापितः सायको वाणो यत्र तदाहितसायकम्, इदं धनुः, मृगेषु हरिणेषु हरिणान् लक्ष्यीकृत्येत्यर्थः, नमयितुम् आकष्टुम्, न उत्सहिष्ये न शक्ष्यामि । कथमित्याह सहेति । यैः मृगैः, सहवसतिम् एकत्रावस्थानं तन्निबन्धनं सौहार्द्दमिति तात्पर्य्यम्, उपेत्य प्राप्य, प्रियायाः शकुन्तलायाः सम्बन्धे, लोचनयोश्चक्षुषोः कान्तेः शोभायाः संविभागः सम्यग् विभज्य दानं कृत इव । तथा च प्रियायाः सुहृत्सु ममापि सौहार्द्दस्यौचित्यात् आदरकरणमेव न्याय्यं न पुनर्हिंसेत्याशयः ।

अत्र पूर्व्वार्द्धं प्रति परार्द्धवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, वाच्या भावाभिमानिनी क्रियोत्प्रेचा च, अनयोः परस्परनिरपेचतया संसृष्टिः । उत्प्रेचया च हरिणनयनमिव शकुन्तलानयनं सुन्दरमित्युपमा व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ।

पुष्पिताग्रा वृत्तम् ॥३॥

(ক) রাজা। (স্বগত) ইনি এইরূপ বলিতেছেন; এদিকে শকুন্তলাকে মনে করিয়া, আমার চিত্তও মৃগয়ার প্রতি নিরুৎসুক হইয়াছে। কারণ—

গুণ আরোপিত আছে, বাণও তাহার উপর স্থাপিত রহিয়াছে; তথাপি কিন্তু হরিণগণের প্রতি এ ধনু আকর্ষণ করিতে পারিতেছি না। কারণ, যে হরিণগণ একত্র অবস্থাননিবন্ধন (বন্ধুতাবশতঃ) আপনাদের নয়নের সৌন্দর্য্য, প্রিয়তমা শকুন্তলাকে যেন ভাগ করিয়া দিয়াছে ॥৩॥

(१) शक्ति शक्तः ।

विदू। राज्ञो मुखमवलोक्य। अत्तभवं किम्पि हिअए कदुअ मन्तेदि, अरस्से क्खु मए रुदिदं (१)। (ब)

राजा। सस्मितम्। अनतिक्रमणीयं सुहृद्वाक्यमिति स्थितोऽस्मि (२)। (भ)

विदू। सपरितोषम्। तेण हि तुमं चिरं जीव (३)। इत्युत्थातुमिच्छति। (म)

(ब) अव भवान् किमपि हृदये कृत्वा मन्त्रयति, अरण्ये खलु मया रुदितम्।

(म) तेन हि त्वं चिरं जीव।

(ब) विदू इति। हृदये कृत्वा चिन्तयित्वेत्यर्थः मन्त्रयति स्वयमेव गुप्तं भाषते। अतएव मया खलु अरण्ये रुदितम् अरण्यरोदनमिव अनर्थकमुक्तम्, भवता अन्यमनस्कतया अश्रुतत्वादित्याशयः।

(भ) राजेति। सुहृदो भवतो वाक्यम्, अनतिक्रमणीयम् अलङ्घनीयम्, इति हेतोः, स्थितोऽस्मि अवस्थितोऽस्मि किमपि कथनात् विरतोऽस्मीत्यर्थः।

(म) विदू इति। सपरितोषं परितोषव्यञ्जकं मुखप्रफुल्लतादिकमभिनीयेत्यर्थः। तेन हि मद्वाक्यरक्षणेनैव हेतुना। उत्थातुं विश्रामार्थं गमनायेति शेषः।

(ব) বিদূষক। (রাজার মুখের দিকে দৃষ্টিপাত করিয়া) তুমি মনে মনে চিন্তা করিয়া কোন বিষয় আলোচনা করিতেছ, আর আমি অরণ্যে রোদন করিলাম।

(ভ) রাজা। (ঈষৎ হাস্যের সহিত) বন্ধুর বাক্য লঙ্ঘন করা যায় না, এই জন্য নীরব রহিয়াছি।

(ম) বিদূষক। (সন্তোষের সহিত) তা হইলে তুমি দীর্ঘজীবী হও। (এই বলিয়া চলিয়া যাইবার জন্য উঠিল।)

(१)⋯ अरखे मए रुदिअ आसि। (२) किमन्यत्। अनतिक्रमणीयं मि⋯।

(३) विदूषकः। चिरं जीव।

राजा। तिष्ठ, शृणु मे सावशेषं वचः (१)। (य)

विदू। आणवेदु भवं। (र)

राजा। विश्रान्तेन भवता ममान्यस्मिन्ननायासे कर्म्मणि सहायेन भवितव्यम् (२)। (ल)

विदू। किं मोदअखज्जिआए (३)। (व)

(र) आज्ञापयतु भवान्।

(व) किं मोदकखादिकायाम्।

(य) राजेति। सावशेषम् अवशेषपर्य्यन्तम्। तथा च उक्तमात्रं श्रुत्वा न गन्तव्यम्, वक्ष्यमाणमपि श्रोतुं त्वया स्थातव्यमित्यर्थः।

(ल) राजेति। विश्रान्तेन कृतविश्रामेण। "गत्यर्थाकर्म्मक" इत्यादिना अकर्म्मकात् श्रमेः कर्त्तरि क्तः। अन्यस्मिन् मृगयाभिन्ने, न विद्यते आयासो यस्मिन् तत्र अपरिश्रम-साध्ये इत्यर्थः; अतो न परिश्रमभयादस्वीकारः कर्त्तव्य इति भावः।

(व) विदू इति। मोदकं लड्डुकविशेषस्तस्य खादिकायां खादने किं मया भवतः सहायेन भवितव्यमित्यर्थः। अनायाससाध्यत्वात्तत्र तवाहमवश्यमेव सहायो भविष्यामीति भावः। औदरिं प्रायेण खाद्यपरमेव व्यवहरतीति कौतुककरमेतत्।

अत्र नर्म्म नाम प्रतिमुखसन्धेरङ्गम्—"परिहासवचो नर्म्म" इति लक्षणात्।

खादिकेति प्रश्ने खादधातोः "प्रश्नाख्यानयोरिञ् च वा" इति वुञ् प्रत्ययः।

(য) রাজা। থাম; শেষপর্য্যন্ত আমার কথা শোন।

(র) বিদূষক। আদেশ কর।

(ল) রাজা। তুমি বিশ্রাম করিয়া, অনায়াসসাধ্য অন্য একটী কার্য্যে আমার সহায় হইবে।

(ব) বিদূষক। কি মোদকভক্ষণে?।

(१) वयस्य! तिष्ठ सविशेषं मे वचः। (२)···ममाप्येकस्मिन्···।

(३) किं मोदअखण्डिआए। तेण हि अअं सुगहीदो क्खणो।

राजा। यद्वक्ष्यामि (१)। (श)

विदू। गहीदो क्खणो (२)। (ष)

राजा। कः कोऽत्र भोः!। (स)

दौवारिकः। प्रविश्य। आणवेदु भट्टा। (ह)

राजा। रैवतक! सेनापतिस्तावदाहूयताम्। (क्ष)

दौवा। तह। इति निष्क्रम्य सेनापतिना सह प्रविश्य। एदु एदु

(ष) गृहीतः क्षणः।

(ह) आज्ञापयतु भर्त्ता।

(श) राजेति। यद्वक्ष्यामि, तत्र सहायेन भवितव्यमित्यर्थः।

विदूषकेण उक्तविधे परिहासे कृतेऽपि राज्ञो धैर्य्यादत्र नर्म्मद्युतिर्नाम प्रतिमुखसन्ध्यङ्गम्—"धृतिस्तु परिहासजा। नर्म्मद्युतिः" इति लक्षणात्।

(ष) विदू इति। क्षणः समयः श्रवणावसर इत्यर्थः, गृहीतः स्वीकृतः, श्रवणसमाप्तिं यावत् स्थास्यामीति तात्पर्य्यम्।

(स) राजेति। भो इति परिजनसम्बोधने। कः कः परिजनः तिष्ठतीति शेषः।

(ह) दौवेति। द्वारि नियुक्तो दौवारिकः। भर्त्ता स्वामी राजेति यावत्।

(क्ष) राजेति। रेवती नामिकायाः स्त्रिया अपत्यमिति रैवतकः। अपत्यार्थे अण् प्रत्ययान्तात् रैवतशब्दात् सञ्ज्ञायां कप्रत्ययः।

(শ) রাজা। যে বিষয় বলিতেছি।

(ষ) বিদূষক। শুনিবার অবসর লইলাম।

(স) রাজা। ওহে! এখানে কে কে আছ?।

(হ) দৌবারিক। (প্রবেশ করিয়া) মহারাজ আদেশ করুন।

(ক্ষ) রাজা। রৈবতক! সেনাপতিকে ডাক।

(१) यत्र वक्ष्यामि। कः कोऽत्र भोः!। (२) अयं पाठः क्वचित् नास्ति।

अज्जो। एस आलावदिस्सकस्सो भट्टा इध ज्जेव चिट्ठदि, उव-सप्पदु णं अज्जो (१)। (क)

सेनापतिः। राजानमवलोक्य स्वगतम्। दृष्टदोषापि मृगया स्वामिनि केवलं गुणायैव संवृत्ता। तथाहि देवः—(२) (ख)

(क) तथा। एतु एतु आर्य्यः। एष आलापदत्तकर्णः भर्त्ता इह एव तिष्ठति, उपसर्पतु एनमार्य्यः।

(क) दौवेति। तथा यथा भवानाज्ञापयति तथा करोमीत्यर्थः। आलापे तव मम च कथोपकथने दत्तौ प्रेरितौ कर्णौ येन सः, भर्त्ता राजा। आर्य्यः सज्जनो भवान्।

(ख) सेनापति इति। दृष्टः प्रत्यक्षसिद्धः दोषः हिंस्रजन्तुभ्यो विपत् अथवा श्रमव्याकुलतादिर्यस्यां सा दृष्टदोषापि अन्यस्मिन् जने इत्यर्थः, मृगया पशुहिंसा, स्वामिनि राजनि, केवलमेकम्, गुणायैव गुणसम्पादनायैव। तथाहि तमेवार्थं जानीहि। "तथं त्या-गणपरिपठितौ धातुर्गतौ" इति कातन्त्रपरिशिष्टटीकायां गोपीनाथः। देवो राजा। एतञ्च बिभर्त्तीतिश्लोकक्रियायाः कर्त्तृपदम्।

(क) দৌবারিক। তাহাই। (এই বলিয়া নির্গত হইয়া, সেনাপতির সহিত পুনরায় প্রবেশ করিয়া) আসুন আসুন আপনি। এই যে আমাদের আলাপে কাণ দিয়া মহারাজ এইখানেই রহিয়াছেন। আপনি ইঁহার নিকট যান।

(খ) সেনাপতি। (রাজাকে দেখিয়া স্বগত) মৃগয়ার দোষ প্রত্যক্ষ দেখিতে পাইলেও, মহারাজের প্রতি তাহা কেবল গুণেই বর্ত্তিয়াছে। কারণ—

(१)···एसो अप्पावअणुकण्ठो इदो दिण्णदिट्ठी एव्व भट्टा चिट्ठदि। उवसप्पदु अज्जो।

(२) सेनापतिः। राजानमवलोक्य। दृष्टदोषापि स्वामिनि मृगया केवलं गुण एव संवृत्ता।

अनवरतधनुर्ज्यास्फालनक्रूरवर्ष्मा (१)
रविकिरणसहिष्णुः स्वेदलेशैरभिन्नः (२)।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्त्ति ॥४॥

अनेति। अनवरतं सततं धनुषो ज्याया गुणस्य आस्फालनेन क्रूरं कठिनं वर्ष्म शरीरं यस्य सः, अतएव रविकिरणान् सूर्य्यरश्मीन् सहिष्णुः न पुनस्तेभ्यः क्लान्त इत्यर्थः, तथा स्वेदलेशैः घर्म्मविन्दुभिः अभिन्नः अविगलितः अविह्वल इति तात्पर्य्यम्। तेन च गिरौ पर्व्वते चरतीति गिरिचरः सर्व्वदा पर्व्वतसञ्चारी, नागो हस्तीव, अपचितमपि उक्तविधपरिश्रमात् क्षीणमपि, व्यायतत्वात् परिच्छदपरिवृतत्वेन व्यायततया अतिशयेन विशालस्थूलतया लक्ष्यमाणत्वादित्यर्थः, अलक्ष्यं कृशतया अदृश्यम्, तथा प्राणो बलमेव सारः स्थिरांशो यत्र तत् प्राणसारं गात्रम् अङ्गनिवहम्, बिभर्त्ति धारयति। तथा च अन्यो राजा आजन्मसुखलालिततया कोमलदेहः रविकिरणासहिष्णुः घर्म्मैर्विह्वलः हिंस्रजन्तुभ्यो विपन्नश्च भवति, अतएव तादृशे मृगया दृष्टदोषैव ; अस्माकमयं राजा तु मृगयावशादेव कठिनदेहः रविकिरणसहिष्णुः घर्म्मैरविह्वलः, हिंस्रजन्तुभ्यः अविपन्नश्च। अतएव दृष्टदोषापि मृगया स्वामिनि केवलं गुणायैव संवृत्तेति भावः।

अत्र श्रौतोपमालङ्कारः।

"शरीरं वर्ष्म विग्रहः" इत्यमरः। "व्यायतं व्यापृते दीर्घे दृढे चातिशयेऽन्यवत्" इति मेदिनी। मालिनी वृत्तम् ॥४॥

ধনুর গুণ অনবরত আকর্ষণ করায় মহারাজের দেহ কঠিন হইয়াছে, সূর্য্যের কিরণ সহ্য করিতে পারিতেছে এবং ঘর্ম্মবিন্দু নির্গত হওয়ায় বিহ্বল হইতেছে না। অঙ্গসকল কৃশ হইয়া থাকিলেও, পরিচ্ছদাবৃত থাকায় বিশাল বলিয়া, তাহা লক্ষ্য করা যায় না; সুতরাং পার্ব্বত্য হস্তীর ন্যায় ইনি, কেবল বলসার দেহ ধারণ করিতেছেন ॥৪॥

(१) क्रूक्रूरपूर्व्वम्, रकर्म्मा। (२) रविकिरणसहिष्णुस्स्वेदलेशैरभिन्नम्।

उपगम्य। जयति जयति स्वामी। स्वामिन्! गृहीतमृगप्रचारं सूचितश्वापदमरण्यम्, तत् किमन्यदनुष्ठीयताम् (१)। (ग)

राजा। भद्रसेन! भग्नोत्साहः कृतोऽस्मि मृगयापवादिना माधव्येन (२)। (घ)

(ग) उपेति। उपगम्य राज्ञः समीपं गत्वा। स्वामी प्रभुः। गृहीतः अवगतः मृगाणां हरिणानां प्रचारो गमनागमनं यस्मिन् तत्, तथा सूचिताः पदचिह्नप्रदर्शनादिना स्ववर्गेषु ज्ञापिताः श्वापदा व्याघ्रादयो हिंस्रजन्तवो यस्मिन् तत्। तथा च अस्मिन्नरण्ये कुत्र देशे हरिणाः प्रचरन्ति कुत्र वा व्याघ्रादयो अवतिष्ठन्ते तत् अवगतमस्माभिरित्यर्थः। एतेन एतदवगमार्थं सेनापतिं प्रति राज्ञ आज्ञा आसीदिति बोध्यम्। तत् तस्मात्, अन्यत् उक्तकार्य्यद्वयभिन्नं किं कार्य्यम्, अनुष्ठीयतां मया क्रियताम्, तदाज्ञाप्यतामित्यर्थः।

(घ) राजेति। भद्रा उत्कृष्टा सेना यस्य स भद्रसेन इति सेनापतेर्नाम, तत्सम्बोधनम्। मृगयापवादिना मृगयाया निन्दाकारिणा, माधवे वसन्ते साधुरिति माधव्यस्तेन तन्नाम्ना विदूषकेणेत्यर्थः। एवञ्च "कुसुमवसन्ताद्यभिधः" इत्यालङ्कारिकनियमः संगृहीत इति ज्ञेयम्। भग्नोत्साहो मृगयां प्रति नष्टोद्यमः। तदद्य न किञ्चिदन्यदनुष्ठातव्यम्, विश्रम्यतामित्याशयः।

(গ) (নিকটে যাইয়া) মহারাজের জয় হউক, জয় হউক। মহারাজ! বনের ভিতরে হরিণগণের বিচরণস্থান জানিয়াছি এবং হিংস্রজন্তুগণেরও অনুসন্ধান করিয়াছি; অতএব আর কি করিব ?।

(ঘ) রাজা। ভদ্রসেন! মৃগয়ার অপবাদকারী মাধব্য, মৃগয়াসম্বন্ধে আমাকে ভগ্নোৎসাহ করিয়াছে।

(१) उपेत्य। जयतु स्वामी। गृहीतश्वापदमरण्यं किमत्रावस्थीयते।

(२)···मन्दोत्साहः···माढव्येन।

सेना। (जनान्तिकम्।) सखे! माधव्य! स्थिरप्रतिज्ञो भव, अहं तावत् स्वामिनश्चित्तवृत्तिमनुवर्त्तिष्ये। (प्रकाशम्।) देव! प्रलपत्येष वैधेयः, ननु प्रभुरेव निदर्शनम्। पश्यतु देवः (१)। (ङ)

मेदश्छेदकृशोदरं लघु भवत्युत्साहयोग्यं वपुः (२)
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले,
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग् विनोदः कुतः ॥५॥

(ङ) सेनेति। आत्मना सहापि विदूषकः सख्येव व्यवहरतीति सेनापतिरपि 'सखे' इत्येव सम्बोधयति। स्थिरप्रतिज्ञो भव मृगया निवर्त्तनविषये इति शेषः। अनुवर्त्तिष्ये अनुसरिष्यामि। विधेयः आत्मनः कर्त्तव्याकर्त्तव्यज्ञानहीनतया सर्वेषामेव वचने स्थितः, विधेय एव वैधेयो मूर्खः प्रज्ञादित्वात् स्वार्थे अण्। प्रलपति अनर्थकं मृगयामपवदति। नन्विति दृढामन्त्रणे। प्रभुर्भवानेव, निदर्शनं मृगयाया उपकारित्वे दृष्टान्तः।

मेद इति; वपुः शरीरम्, मेदसः देहस्थूलतासम्पादकधातुविशेषस्य छेदेन परिश्रमाधिक्यात् विनाशेन कृशं क्षीणमुदरम्, यत्र तत्, अतएव लघु भारहीनम्, अतएव च उत्साहयोग्यं सर्वेष्वेव कर्म्मसु उद्यमकरणक्षमं भवति। अपि तथा, सत्त्वानां हन्तव्यजन्तूनाम्, भयक्रोधयोः भयकाले क्रोधकाले चेत्यर्थः, विकृतिमत् सञ्जातविकारम्,

(ঙ) সেনাপতি। (বিদূষকের নিকট চুপি চুপি) সখে! মাধব্য! তুমি স্থিরপ্রতিজ্ঞ হও; আমি কিন্তু রাজার মনোবৃত্তি অনুসরণ করিব। (প্রকাশ্যে) মহারাজ! এ মূর্খ, অনর্থক বলিতেছে; কারণ, মৃগয়ার উপকারিতাসম্বন্ধে মহারাজই দৃষ্টান্ত। তাহা মহারাজ দেখুন—

(१) माधव्य! इति सम्बोधनं पश्यतु देवः, इति च क्वचित् नास्ति।

(२) उत्थानयोग्यं वपुः।

विदू। सरोषम्। अवेहि रे उच्छाअहेतुअ! अत्तभवं पहुदिं आवणो, तुमं दाव दासीए पुत्तो अडइदो अडइं

भिन्नं लक्ष्यते चेष्टाविशेषदर्शनेन अवगम्यते। तथा च सति युद्धेऽपि शत्रूणां भयस्य क्रोधस्य वा प्रागवगमात् बाहुल्येन सुविधैव जायत इति भावः। अपि चेति चार्थः। धन्विनां धनुर्द्धराणाम्, स उत्कर्षः प्राधान्यम्, यत् चले चञ्चले गमनशीले इति यावत्, लक्ष्ये शरव्ये, इषवो बाणाः, सिध्यन्ति कृतकार्य्या भवितुमर्हन्ति अक्रम-लक्ष्यवेधाय शक्नुवन्तीत्यर्थः। अतएव मृगयां मिथ्या हि मिथ्यैव व्यसनं वदन्ति 'मृगया व्यसनम्' इति मन्वादयो मिथ्यैव ब्रुवन्तीत्यर्थः; व्यसनस्य निरर्थकत्वात् मृगयायास्तु उक्तरीत्या सार्थकत्वादित्याशयः। विशेषतश्च ईदृक् विनोद आमोदः, कुतः मृगया-भिन्नात् कस्मात् कार्य्यात् भवति, अपि तु कुतोऽपि नेत्यर्थः। अतएव एष वैधेयः प्रलपत्ये-वेति भावः।

अत्र मृगयाया व्यसनत्वस्य मिथ्यात्वं प्रति बहुकारणोपन्यासात् समुच्चयोऽलङ्कारः, तथा वदन्तीत्यन्तवाक्यं प्रति पूर्ववाक्यत्रयार्थो हेतव इति वाक्यार्थहेतुकं काव्यलिङ्गम् अर्था-पत्तिश्चेति; एषाञ्च परस्परनिरपेक्षतया संसृष्टिः।

"द्रव्यासु व्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः।

मृगयाया व्यसनत्वमाह मनुः—

"मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियो मदः।
तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः॥"

शार्दूलविक्रीड़ितं वृत्तम्॥५॥

মৃগয়ার পরিশ্রমে মেদধাতু নষ্ট হওয়ায় উদর কৃশ হয় এবং শরীর হালকা ও উৎসাহের উপযুক্ত হয়; ভয় এবং ক্রোধের সময় জন্তুগণের চিত্তবিকার বুঝিতে পারা যায়; ধনুর্দ্ধরদিগের তাহাই প্রাধান্য যে, গমন-শীল লক্ষ্যের প্রতি বাণগুলি কৃতকার্য্য হইতে পারে। অতএব মহর্ষিরা মৃগয়াকে যে ব্যসন বলিয়াছেন, তাহা মিথ্যা। কারণ, মৃগয়াভিন্ন এমন আমোদ কোথায় পাওয়া যায়॥৫॥

आहिण्डन्तो जाव सिआलमिअलोलुअस्स कस्स वि जिस्सरिच्छस्स मुहे णिवड़िदो होहि (१)। (च)

राजा। सेनापते! आश्रमसन्निकर्षे स्थितोऽस्मीति वचनं ते नाभिनन्दामि। अद्य तावत्—(२) (छ)

(च) अपेहि रे उत्साहहेतुक! अयमभवान् प्रकृतिमापन्नः, त्वं तावत् दास्याः पुत्रः अटवीतः अटवीमाहिण्डमानः यावत् शृगालमृगलोलुपस्य कस्यापि जीर्णऋक्षस्य मुखे निपतितो भव।

(च) विदू इति। अपेहि दूरं गच्छ। अयमभवान् माननीयो राजा, प्रकृतिमापन्नः मत्प्रबोधेन स्वभावं प्राप्तः। उत्साहजननात् शपति त्वमिति। दास्याः पुत्रः हीन इत्यर्थः, अटवीतः अटवीं वनात् वनम्, आहिण्डमानः पर्य्यटन्, शृगालमृगलोलुपस्य शृगालहरिणयोर्भक्षणाय अभिलाषिणः। जीर्णऋक्षस्य वृद्धभल्लूकस्य।

(छ) राजेति। आश्रमस्य सन्निकर्षे समीपे। नाभिनन्दामि न प्रशंसामि त्वयाभिहितं वचनमभिनन्द्य तदनुसारेण न खलु मृगयायां प्रवृत्तो भवामीत्यर्थः; आश्रम-सन्निकर्षे अवस्थानेन तवत्यप्राणिनां हननस्य नितरामन्याय्यत्वादिति भावः। अद्येत्यस्य गाहन्तामित्यादिभिः श्लोकस्थक्रियाभिरन्वयः।

(চ) বিদূষক। (ক্রোধের সহিত) ওহে উৎসাহজনক! তুমি চলিয়া যাও। রাজা প্রকৃতিস্থ হইয়াছেন। দাসীর ছেলে তুমি, এক বন হইতে অন্য বনে বিচরণ করতঃ, শৃগাল ও মৃগলোভী বৃদ্ধ ভল্লুকের মুখে নিপতিত হও।

(ছ) রাজা। সেনাপতি! তপোবনের নিকটে রহিয়াছি;

(१) अत्तभवं पकिदिं आपण्णो। तुमं अडवीदो अड़वीं आहिण्डन्तो णरणासिआ-लोलुअस्स जिस्सरिच्छस्स कस्स विमुहे पड़िस्ससि।

(२) भद्र सेनापते! आश्रमसन्निकृष्टे स्थिता: स्मः, अतस्ते वचः⋯।

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताड़ितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले (१)
विश्रामं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः ॥६॥

गाहन्तामिति। महिषाः, शृङ्गैः वारं वारं शृङ्गैस्ताड़ितम् आहतम्, निपीयते अस्मिन्निति निपानं जलाशयस्तस्य सलिलं जलम्, गाहन्ताम् आलोडयन्तु। मृगयातो निवृत्तिवशेन अस्मद्भयाभावात् यथास्वभावमाचरन्त्विति भावः। एवमन्यत्रापि। मृगकुलं हरिणसमूहः, छायायाम् अनातपे देशे बद्धं विहितं कदम्बकं समवेतभावो येन तादृशं सत्, रोमन्थं गिलितं वस्तु समुद्गीर्य्य पुनस्तस्य चर्वणम्, अभ्यस्यतु पौनःपुन्येन करोतु। वराहपतिभिः शूकरश्रेष्ठैः, विस्रब्धैः अस्मद्भयाभावेन आश्वस्तचित्तैः सद्भिः, पल्वले क्षुद्रजलाशये, मुस्ताक्षतिः मूलोत्पाटनेन मुस्तकानां हानिः, क्रियताम्। तथा इदम् अस्मद्धनुश्च, शिथिलः प्रान्तभागद्वये संश्लेषाभावात् श्लथीभूतः ज्याबन्धः एकप्रान्तबद्धगुणो यस्य तत् तथाभूतं सत्, विश्रामं लभतां मृगयानिवृत्त्या बाणक्षेपार्थमाकर्षणाभावादिति भावः।

अत्र गाहन्ताम् इति बहुवचनेन प्रक्रम्य अभ्यस्यतु इत्येकवचनप्रयोगाद्वचनविषयो भग्नप्रक्रमतादोषः, आत्मनेपदपरस्मैपदाभ्यामन्योऽपि प्रत्ययविषयः; किन्तु महिषा इति मृगकुलमिति च बहुवचनैकवचनाभ्याम् अपरोऽपि वचनविषयः, पुंलिङ्गनपुंसकलिङ्गाभ्याम् अन्यो लिङ्गविषयः, क्रियतामिति कर्म्मणि प्रत्ययात् इतरो वाच्यविषयः, वराहपतिभिरिति बहुवचनात् आत्मवचनविषयः पुनर्लभतामिति कर्त्तरि प्रत्ययादपरोऽपि वाच्यविषय इति सर्व्वे व भग्नप्रक्रमतादोषाः। तेषां समाधानाय च श्लोक एवं पठनीयः—

शृङ्गैः कासरवृन्दमम्बु सरसी भूत्वाहतं गाहतां
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यताम्।
विस्रब्धं कुरुतां वराहसमितं मुस्ताक्षतिं पल्वले
विश्रामं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः॥

(१) विस्रब्धं क्रियतां वराहततिभिः…।

সেনা। যথা প্রভবিষ্ণবে রোচতে (১)। (জ)

রাজা। তেন হি নিবর্ত্তয় পুরোগতান্ ধনুর্গ্রাহিণঃ। যথা চ মে সৈনিকাস্তপোবনং নাভিরুন্ধন্তি দূরাৎ পরিহরন্তি চ, তথা নিষিদ্ধব্যাঃ। পশ্য—(২) (ঝ)

এতৎপাঠ অভ্যস্যতামিতি "উপসর্গাদস্যত্যূহ্যো র্বা" ইতি পক্ষে কর্ত্রাদিত্বাদাত্মনেপদম্। শার্দ্দূলবিক্রীড়িতং বৃত্তম্ ॥৬॥

(জ) সেনেতি। প্রভবিষ্ণবে প্রভুত্বশীলায় ভবতে, যথা রোচতে, তথৈব ভবত্বিত্যর্থঃ। প্রভবিষ্ণব ইতি "ভ্রাজ্যলঙ্কৃঞ্ভুবি" ইত্যাদিনা ভবতেরিষ্ণুচ্।

(ঝ) রাজেতি। তেন হি বিশ্রামস্য ভবতোঽপ্যভিমতত্বেনৈব হেতুনা। পুরোগতান্ অগ্রগতান্ ধনুর্গ্রাহিণো ধানুষ্কান্। নাভিরুন্ধন্তি নোৎপীড়য়ন্তি, পরিহরন্তি পরিত্যজন্তি। নিষিদ্ধব্যাঃ সৈনিকা ইত্যন্বয়ঃ। ননু তপোবনাভিরোধে কো দোষ ইত্যাহ পশ্যেতি। দোষং পর্য্যালোচয়েত্যর্থঃ।

সুতরাং আপনার কথার প্রশংসা করিয়া মৃগয়ায় প্রবৃত্ত হইতে পারি না। অতএব আজ—

মহর্ষিগণ, শৃঙ্গদ্বারা বার বার সন্তাড়িত সরোবরের জলে অবগাহন করুক; হরিণগণ ছায়াতে সমবেত হইয়া, চর্ব্বিত চর্ব্বণ করুক, বৃহৎ শূকরসমূহ, বিশ্বস্তচিত্ত হইয়া, ক্ষুদ্র জলাশয়ের তীরে মুথা নষ্ট করুক এবং শিথিলগুণ আমার এই ধনু, বিশ্রাম লাভ করুক ॥৬॥

(জ) সেনাপতি। প্রভুর যাহা অভিরুচি।

(ঝ) রাজা। তাহা হইলে অগ্রগামী ধনুর্দ্ধরদিগকে নিবৃত্ত করুন। আমার সৈন্যগণ যাহাতে তপোবনের ক্ষতি না করে এবং দূর হইতেই

(১) যৎ প্রভবিষ্ণবে রোচতে।

(২) তেন হি নিবর্ত্তয় পূর্ব্বগতান্ বনগ্রাহিণঃ। যথা ন মে সৈনিকাস্তপোবনমুপরুন্ধন্তি তথা নিষিদ্ধব্যাঃ। পশ্য—

शमप्रधानेषु तपोवनेषु
गूढ़ं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला अपि सूर्य्यकान्ता
ते ह्यन्यतेजोऽभिभवाद्दहन्ति (१) ॥७॥

सेना । यथाज्ञापयति स्वामी ।

शमेति । शमः शान्तिरेव प्रधानं येषु तादृशेषु तपोवनेषु, गूढं हि गुप्तमेव अनभिभवावस्थायाम् अन्यैरलक्षितमेवेत्यर्थः, दाहो भस्मकरणमेव आत्मा स्वभावो यस्य तत् दाहात्मकं तेजः, अस्ति । हि तथाहि, स्पर्शे अनुकूला गूढतेजस्कतया वहिः सुखकरा अपि, ते प्रसिद्धाः, सूर्य्यकान्ताः स्वनामख्याता मणिविशेषाः, अन्यस्य तेजसः सूर्य्यस्येत्यर्थः अभिभवात् स्पर्शेनाक्रमणात्, दहन्ति दाहजनकं तेज उद्गिरन्ति । तथा च यथा वहिः स्पर्शानुकूला अपि सूर्य्यकान्ताः सूर्य्यकिरणाक्रमणात् तेज उद्गीर्य्य दहन्ति ; तथा वहिः शान्तिप्रधानान्येतानि तपोवनानि परैराक्रमणात् मुनिगणद्वारा तेज उद्गीर्य्य दग्धीकुर्व्वन्त्येवेति तपोवनाभिरोधो न कर्त्तव्य एव इत्याशयः ।

अतएवात्र दृष्टान्तोऽलङ्कारः ।

"आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" इत्यमरः ।

उपेन्द्रवज्रेन्द्रवज्रयोर्मेलनादुपजातिर्वृत्तम् ॥७॥

সে তপোবন পরিত্যাগ করে, সেইভাবে তাহাদিগকে নিষেধ করিয়া দিবেন। দেখুন—

শান্তিপ্রধান তপোবনে দাহকারী একপ্রকার তেজ গুপ্তভাবে রহিয়াছে। স্পর্শযোগ্য সূর্য্যকান্তমণিও অন্য তেজের আক্রমণ হইলে দাহ করিয়া থাকে ॥৭॥

সেনাপতি। প্রভু যাহা আদেশ করেন।

(१) स्पर्शानुकूला इव सूर्य्यकान्तास्तदन्यतेजोऽभिभवाद्वमन्ति ।

विदू। भो उच्छाहहेतुम! णिक्कम णिक्कम (१)। (ञ)
सेनापतिर्निष्क्रान्तः।

राजा। परिजनानवलोक्य। मृगयावेशमपनयन्तु भवन्तः। रैवतक! त्वमपि स्वनियोगमशून्यं कुरु (२)। (ट)

रैव। जं महाराओ आणवेदि (३)। इति निष्क्रान्तः। (ठ)

विदू। किदं भवदा णिम्मक्खिअं; ता इमस्सिं पादव-

(ञ) भो: उत्साहहेतुक! निष्क्राम निष्क्राम।

(ठ) यत् महाराज आज्ञापयति।

(ञ) विदू इति। उत्साहहेतुक! मृगयां प्रति उत्साहजनक!। हेतुकेति कुत्सायां कप्रत्ययः। कुत्सा च विदूषकस्यैव मते।

(ट) राजेति। अपनयन्तु परित्यजन्तु अद्य मृगयाया अकरणीयत्वादिति भावः। रैवत्याः तदाख्यायाः स्त्रिया अपत्यमिति रैवतः "बाण्पत्ये" इत्यण्प्रत्ययान्तात् संज्ञायां कप्रत्ययः। रैवतकेति दौवारिकसम्बोधनम्। स्वनियोगम् आत्मानं प्रति आदेशम्, अशून्यं पूर्णं कुरु आदेशं पालयेत्यर्थः। अथवा स्वनियोगं द्वाररक्षारूपमात्मनोऽधिकारम् अशून्यं पूर्णं कुरु पूर्ववत् द्वारमेवेदानीं रक्षेत्यर्थः।

(ঞ) বিদূষক। ওহে উৎসাহজনক! নির্গত হও, নির্গত হও।
( সেনাপতি চলিয়া গেলেন। )

(ট) রাজা। ( পরিজনবর্গের প্রতি দৃষ্টিপাত করিয়া ) তোমরা মৃগয়াবেশ পরিত্যাগ কর; রৈবতক! তুমিও নিজের স্থান পূর্ণ কর।

(ঠ) রৈবতক। মহারাজ যাহা আদেশ করেন। ( এই বলিয়া চলিয়া গেল। )

(१) धंसदु दे उच्छाहवुत्तन्तो।

(२) परिजनं विलोक्य। अपनयन्तु भवन्तो मृगयावेशम्।…स्वं नियोगं…।

(३) परिजनः। जं देवो आणवेदि।

यावदेतान् वेदिसंस्तरणार्थं दर्भान् ऋत्विगभ्य उपाहरामि । परिक्रम्यावलोक्य च । आकाशे । प्रियंवदे ! कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीदलानि नीयन्ते ? (१) । श्रुतिमभिनीय । किं कथयसि "आतपलङ्घनाद्बलवदस्वस्थशरीरा शकुन्तला, तस्याः शरीरनिर्वापणाय" इति ? । प्रियंवदे ! यत्नादुपचर्य्यताम् ; सा हि तत्रभवतः कुलपतेर्हितीयमुच्छ्वसितम् । अहमपि तावद्वैतानिकं शान्त्युदकमस्या एव गौतमीहस्ते विसर्जयामि । इति निष्क्रान्तः (२) । (ग)

बाणयोजने, का कथा, अपि तु क्वापि नेत्यर्थः । बाणसन्धानेन तु विघ्नान् व्यपोहत्येवेति भावः । स राजा, धनुषो हुङ्कारेणेव हुर्मित शब्देनैव, दूरतः ज्याशब्देनैव, विघ्नान् विघ्नस्वरूपान् राक्षसान्, व्यपोहति निरस्यति । अतो महाप्रभाव एव स राजेति भावः ।

अत्र का कथेति अर्थापत्तिः हुङ्कारेणेवेति गृणोत्प्रेक्षा च, अनयोर्मिथो निरपेक्षतया संसृष्टिः ॥१॥

(ग) यावदिति : यावच्छब्दो वाक्यालङ्कारे । एतान् दर्भान् कुशान्, वेदौ यागाय परिष्कृतभूमौ संस्तरणार्थं पातनार्थम्, ऋत्विग्भ्यो याजकेभ्यः, उपाहरामि समर्पयामि । परिक्रम्य यागस्थाने गमनार्थं पादक्षेपं कृत्वा, अवलोक्य प्रियंवदाया नलिनीदलानि नीयन्ते इति दृष्ट्वा । आकाशे शून्ये रङ्गालये वस्तुतः प्रियंवदया अभावेऽपीत्यर्थः । तथा च "किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते ।
श्रुत्वेवानुक्तमप्यर्थं तत् स्यादाकाशभाषितम् ॥"

---

কারণ, বাণসন্ধানের কথা আর কি বলিব ; ধনুর হুঙ্কারের ন্যায় দূর হইতে জ্যাশব্দদ্বারাই তিনি বিঘ্ন দূর করিয়া থাকেন ॥১॥

(१)···इमान्···उपनयामि । नलिनीपत्राणि ।

(२) किं ब्रवीषि···अस्वस्था शकुन्तला···। तर्हि त्वरितं गम्यताम् । सखि ! सा खलु भगवतः काश्यपस्य कुलपतेरुच्छ्वसितम् ।·· अस्यै गौतमीहस्ते विसर्जयिष्यामि ।

কস্য জনস্য নিমিত্তং, উশীরানুলেপনং পিষ্টবীরণমূলকৃতানুলেপনম্, মৃণালবন্তি মৃণালযুক্তানি, নলিনীদলানি পদ্মপত্রাণি। শ্রুতিম্ উৎকর্ণত্বাদিরূপাং শ্রবণভঙ্গীম্। আতপেন রবিকিরণেন লঙ্ঘনাৎ উপবনপরিষ্কারাদৌ শ্রবনাৎ শরীরব্যাপনাদিত্যর্থঃ, বলবৎ অত্যন্তম্ অসুস্থং সন্তপ্ততয়া অপ্রকৃতিস্থং শরীরং যস্যাঃ সা। তস্যাঃ শকুন্তলায়াঃ শরীরস্য নির্বাপণায় তাপোপশমায়। ইতি কিং কথয়সীতি পূর্বেণান্বয়ঃ।

"লঙ্ঘনন্তুপবাসে স্যাৎ ক্রমণে প্লবনেঽপি চ" ইতি মেদিনী। হি যস্মাৎ, সা শকুন্তলা, তত্রভবতঃ পূজনীয়স্য, কুলপতেঃ প্রাগুক্তলক্ষণস্য কণ্বস্য, দ্বিতীয়ম্ উচ্ছ্বসিতং জীবনম্, তথৈব তেন সমাদরকরণাদিতি ভাবঃ। বৈতানিকং যজ্ঞসম্বন্ধীয়ম্, শান্ত্যুদকং তাপশান্তিকরং জলম্, অস্যৈ শকুন্তলায়ৈ এব শকুন্তলার্থমেব, গৌতম্যাঃ তদাখ্যায়াঃ কণ্বস্য ধর্মভগিন্যা হস্তে, বিসর্জয়ামি অন্যেন কেনচিৎ দাপয়ামি। ইতি উক্ত্বা ইতি শেষঃ।

দ্বিতীয়মুচ্ছ্বসিতমিতি শকুন্তলোচ্ছ্বসিতয়োর্ভেদেঽপি অভেদাধ্যবসায়াদতিশয়োক্তি-রলঙ্কারঃ।

"বিতানো যজ্ঞ উল্লোচে বিস্তারে পুনপুংসকম্। ক্লীবং বৃত্তবিশেষে স্যাৎ বিলিপ্তো মন্দতুচ্ছয়োঃ॥" ইতি মেদিনী।

---

(গ) বেদির উপরে আস্তরণ করিবার জন্য এই কুশগুলি পুরোহিত-দিগের নিকট সমর্পণ করি। (পাদক্ষেপপূর্ব্বক দেখিয়া শূন্যে) প্রিয়ংবদা! তুমি কাহার জন্য এই বিণ্যার মূলের অনুলেপন এবং মৃণালযুক্ত পদ্মের পাতাগুলি নিয়া যাইতেছ?। (শ্রবণ অভিনয় করিয়া) কি বলিলে? রৌদ্রে পরিশ্রম করায় শকুন্তলার শরীর অত্যন্ত অসুস্থ হইয়াছে; তাহার শরীর শীতল করিবার জন্য। প্রিয়ংবদা! যত্নপূর্ব্বক পরিচর্য্যা কর; কারণ, শকুন্তলা মাননীয় কুলপতি কণ্বের দ্বিতীয় জীবন। আমিও ইহার জন্যই গৌতমীর হাতে যজ্ঞীয় শান্তির জল পাঠাইয়া দিতেছি। (এই বলিয়া চলিয়া গেল।)

## विष्कम्भकः। (घ)

ततः प्रविशति समदनावस्थो राजा (१)। (ङ)

राजा। सचिन्तं निश्वस्य (२)।

जाने तपसो वीर्य्यं सा बाला परवतीति मे विदितम्।
न च निम्नादिव सलिलं निवर्त्तते मे ततो हृदयम् (३) ॥१॥

(घ) विष्केति। विष्कम्भाति पूर्वापरम् उपाख्यानं संयोजयति यः प्रबन्धः स विष्कम्भकः। तल्लक्षणन्तु साहित्यदर्पणे यथा—

"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः।
शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः॥"

तथा चात्र 'अहो महाप्रभावो राजा' इत्यादिना 'विघ्नान् व्यपोहति' इत्यन्तेन सन्दर्भेण यज्ञायतनात् राक्षसापसारणरूपवृत्तकथांशनिदर्शनम्; 'प्रियंवदे! कस्येदम्' इत्यादिना 'विसर्जयामि' इत्यनेन च शकुन्तलासन्तापशुश्रूषात्मकवर्त्तिष्यमाणकथांश--निदर्शनं सूचितमित्यनुसन्धेयम्। स चायं मध्यमपात्रेण यजमानशिष्येण प्रयोजितत्वात् शुद्ध इति बोध्यम्।

(ङ) तत इति। मदनावस्थया उत्कण्ठादिकामदशया सहेति समदनावस्थः, राजा प्रकरणात् दुष्मन्तः।

(घ) বিষ্কম্ভক।

(ঙ) তদনন্তর সকাম অবস্থায় রাজার প্রবেশ।

রাজা। (চিন্তার সহিত নিশ্বাস ত্যাগ করিয়া)

(१) कामयमानावस्थः। (२) राजा। निश्वस्य।

(३)···जानामि ततो हृदयं तथापि नेदं निवर्त्तयितुम्।

भगवन्! मन्मथ! कुतस्ते कुसुमायुधस्य सतस्तैक्ष्ण्य-
मेतत् (१)। स्मृत्वा। आं ज्ञातम् (२)। (च)

नन्वात्मनः कामपीड़ानिवृत्तये रहो वा बलाद्वा शकुन्तलया सह सङ्गम्यतामित्याह जाने इति। तपसो मुनीनां तपस्यायाः, वीर्य्यं सामर्थ्यम्, अहं जाने अवगच्छामि। तथा च रहःसङ्गमे बलात्सङ्गमे वा महर्षिः कण्वस्तदवगत्य मां भस्मीकरिष्यतीति तदुभयविधोऽपि सङ्गमो न सम्भवतीति भावः। अथ तर्हि यथा शकुन्तला तुभ्यमात्मदानं करोति तथा चेष्ट्यतामित्याह सेति। सा बाला शकुन्तला, परवती पराधीना, इति मे विदितं ज्ञातमस्ति। अतस्तस्या आत्मदानमपि न सम्भवतीति भावः। ननु तदा ततो हृदयं निवर्त्त्य सुस्थो भवत् इत्याह न चेति। निम्नात् गभीरदेशात् सलिलं जलमिव, ततः शकुन्तलातः, मे मम हृदयस्य कम्, न निवर्त्तते न उत्तिष्ठति न प्रत्यावर्त्तते च। अतएव इदानीं का गतिरिति भावः।

अत्र श्रौतोपमालङ्कारः। आर्य्या जातिः ॥१॥

(च) भगवन्निति। हे भगवन्! जगति सर्वत्र समानक्षमताप्रकाशात् महा-माहात्म्यशालिन्! मनो मथ्नातीति हे मन्मथ! कुसुमं पुष्पमेव आयुधमस्त्रं यस्य तादृशस्य सतः, एतत् ईदृशं तैक्ष्ण्यं तीक्ष्णता प्रखरता। तथा च भवतः पुष्परूप-कोमलायुधतया कोमलत्वस्यैव सम्भवे ईदृशी तीक्ष्णता आश्चर्य्यैवेति भावः।

अतएवात्र हेतुविरुद्धगुणोत्पत्तेर्विषमालङ्कारः। तैक्ष्ण्यमिति पदांशगतो दुःश्रवत्व-दोषः 'प्रखरतैषा' इति पाठेन समाधेयः। स्मृत्वा स्मरणभङ्गीमभिनीय। आमिति स्मरणार्थमव्ययम्। ज्ञातं चिन्तया तीक्ष्णताकारणमवगतमित्यर्थः।

"आं ज्ञाने निश्चयस्मृत्योः" इति मेदिनी।

---

আমি তপস্যার শক্তি জানি; আবার সেই বালিকা যে পরাধীনা তাহাও আমার জানা আছে। কিন্তু নিম্নস্থান হইতে জলের ন্যায়, আমার মন শকুন্তলা হইতে নিবৃত্তি পাইতেছে না ॥১॥

(চ) হে মাহাত্ম্যশালী কামদেব! তুমি কুসুমায়ুধ; সুতরাং

---

(१) क्वचिदयं पाठो नास्ति। (२) क्वचिदेष पाठो न दृश्यते।

अद्यापि नूनं हरकोपवह्नि-
स्त्वयि ज्वलत्यौर्व इवाम्बुराशौ।
त्वमन्यथा मन्मथ! मद्विधानां
भस्मावशेषः कथमेवमुष्णः (१) ॥२॥

किं ज्ञातमित्याह अद्यापीति। हे मन्मथ! अम्बुराशौ समुद्रे, और्वो वाड़वानल इव, हरस्य महादेवस्य कोपवह्निः क्रोधाग्नितृतीयनयनाग्निः, अद्यापि इदानीमपि, त्वयि ज्वलति, इति नूनं निश्चितम्। अन्यथा न ज्वलति चेत् तदेत्यर्थः, हे मन्मथ! हरेण दग्धीकरणात् भस्मैव अवशेषश्चरमावस्था यस्य स तादृशः त्वम्, मद्विधानां मादृशानां कामातुराणां जनानां सम्बन्धे इति तात्पर्यम्, कथम् एवम् इत्थम् उष्णः, अनुभूयसे इति शेषः।

अत्र शीतोपमालङ्कारप्रौढोक्तिभ्यां विच्छित्तिवशात् उष्णत्वरूपसाधनेन मन्मथे वह्नि-ज्वलनात्मकसाध्यस्य ज्ञानादनुमानालङ्कारः, शीतलीभूतभस्मावशेषात् उष्णत्वरूपगुणोत्पत्ते-र्विषमालङ्कारस्य; अनयोर्गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः। न च नूनमित्यस्योत्-प्रेक्षाव्यञ्जकतया उत्प्रेक्षैवेयमिति वाच्यम्, अत्र नूनमित्यस्य निश्चयार्थकत्वात् तथैव चानुभवात् तर्कार्थकत्वस्थल एव चोत्प्रेक्षाव्यञ्जकत्वाङ्गीकारात् "उत्प्रेक्षायामनिश्चिततया प्रतीतिः, इह तु निश्चिततयेत्युभयोर्भेदः" इति दर्पणकारोक्तेश्च।

अत्र स्मृतिर्नाम नाट्यलक्षणञ्च—"स्मृतिः केनचिदंशेन किञ्चिदयत्नानुभीयते" इति दर्पणलक्षणात्।

उर्वस्य ऋषेरपत्यमिति और्वः। पुरा किल उर्वेण ऋषिणा अयोनिजं पुत्रमिच्छता स्वबाहू निर्मथ्य यः पुरुषो निर्गमितः, समुद्रे वड़वामुखे स्थापितश्च, स एव वाड़वानलः। इति पौराणिकीवार्त्ता। "और्वस्तु वाड़वो वड़वानलः" इत्यमरः।

इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनादुपजातिर्वृत्तम् ॥२॥

তোমার এরূপ প্রখরতা আসল কোথা হইতে।। (স্মরণ করিয়া) ও! বুঝিয়াছি।

(१) कस्मिंश्चित् पुस्तके एष श्लोकोऽपि नास्ति।

अपि च, त्वया चन्द्रमसा च अतिविश्वसनीयामभिसन्धीयते कामिसार्थः (१) । कुतः—(छ)

तव कुसुमशरत्वं शीतरश्मित्वमिन्दोः
द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखैः
त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥३॥

(छ) इदानीमुपालम्भमारभते अपि चेति । अतिविश्वसनीयाभ्यां कोमलत्वेन लोकैरत्यन्तविश्वास्याभ्यां युवाभ्याम्, कामिसार्थः कामुकसमूहः, अभिसन्धीयते परं प्रखरताप्रकाशात् प्रत्यार्य्यते ।

"स घसार्थौ तु जन्तुभिः" इत्यमरः । "वञ्चनञ्चाभिसन्धानं व्यलीकञ्च प्रतारणम्" इति हेमचन्द्रः ।

तवेति । तव प्रकरणात् मन्मथस्य, कुसुमानि पुष्पाण्येव शरा यस्य तत्त्वम्, इन्दोश्चन्द्रस्य, शीताः शीतला रश्मयः किरणा यस्य तत्त्वम्, इदं द्वयं मद्विधेषु मादृशेषु कामिजनेषु विषयेषु, अयथार्थं मिथ्याभूतम्, दृश्यते । कथमयथार्थमित्याह विसृजतीति । इन्दुश्चन्द्रः हिमं गर्भे अभ्यन्तरे येषां तैस्तादृशैः, मयूखैः किरणैः, अग्निम्, विसृजति वर्षति ; अत्रापि मद्विधेष्वित्यन्वीयते । मद्विधैस्तथैवानुभवादिति भावः । तथा त्वं मन्मथोऽपि, कुसुमबाणान्, वज्राणामिव सारो बलं येषां ते वज्रसाराः, अवज्रसारान्

সমুদ্রে বড়বানলের ন্যায়, নিশ্চয়ই তোমাতে অদ্যাপি মহাদেবের ক্রোধানল জ্বলিতেছে ; না হইলে, হে কামদেব ! তুমি ভস্মাবশিষ্ট হইয়া, আমাদের মত লোকের পক্ষে এরূপ উষ্ণ হইলে কিরূপে ॥২॥

(ছ) আরও, তুমি এবং চন্দ্র এই দুইজন অত্যন্ত বিশ্বাসের পাত্র হইয়া কামী লোকদিগকে প্রতারণা করিয়া থাক। কারণ,

(१) मदनबाधा निरूप्य । भगवन् ! कुसुमायुध ! त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसन्धीयते कामिजनसार्थः । कुतः—

अथवा (१)। (ज)

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे ।
यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति (२) ॥४॥

भगवन् ! एवमुपालब्धस्य ते न मां प्रत्यनुक्रोशः (३)। (झ)

वज्रसारान् करोषीति वज्रसारीकरोषि ; मद्विधैष्विव्यनुषङ्गः । मद्विधानामसह्यत्वादित्याशयः । अतएव कुसुमशरत्वेन शीतरश्मित्वेन च अतिविश्वसनीयाभ्यां मद्विधः कामिसार्थः अभिसन्धीयत एवेति समुदायाभिप्रायः ।

अत्र अयथार्थत्वं प्रति परार्द्धवाक्यार्थद्वयस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, हिमगर्भमयूखेभ्यः अग्निविसर्गोत्पत्तेः कुसुमबाणेभ्यो वज्रवत्प्रहारोत्पत्तेश्च विषमालङ्कारद्वयम्, इत्येतेषामङ्गाङ्गिभावेन सङ्करः ।

गुणातिपातो नाम नाट्यलक्षणञ्च—"गुणातिपातः कार्य्यं यद्विपरीतं गुणान् प्रति" इति दर्पणलक्षणात् ।

मालिनी वृत्तम् ॥३॥

(ज) पद्यान्तरमभिधत्ते अथवेति ।

अनिशमिति । मकरकेतुर्मन्मथः, मदिरे मत्तखञ्जनपक्षिद्वयमिव आयते दीर्घे नयने नेत्रद्वयं यस्यास्ताम्, तां शकुन्तलाम्, अधिकृत्य अवलम्ब्य प्रहारे आश्रित्य, यदि मां प्रहरति मदुद्देशेन तां प्रहृत्य तदुद्देशेन यदि माञ्च प्रहरतीत्यर्थः, इति एवं सति, अनिशं सर्वदा, मे मम मनसो रुजं पीड़ाम्, आवहन्नपि जनयन्नपि, अभिमतः अनुकूलत्वेन सम्मतः स्यादिति शेषः, मदुद्देशेन तस्या अपि प्रहारात् तथैव च तदनुरागलाभादिति भावः ।

তোমার কুসুমশরত্ব, আর চন্দ্রের শীতরশ্মিত্ব, এই দুইটী পদার্থ, আমার মত লোকের পক্ষে মিথ্যা দেখিতেছি। কারণ, চন্দ্র হিমগর্ভ কিরণদ্বারা অগ্নিবর্ষণ করেন, আর তুমিও পুষ্পময় বাণগুলিকে বজ্রের ন্যায় তীক্ষ্ণ কর ॥৩॥

(१-२-३) चिह्नितपाठाः पुस्तकान्तरे न दृश्यन्ते ।

वृथैव सङ्कल्पशतैरजस्रम्
अनङ्ग! नीतोऽसि मयातिवृद्धिम्।
आकृष्य चापं श्रवणोपकण्ठे
मय्येव युक्तस्तव बाणमोक्षः (१) ॥५॥

अत्र पीडाजनकोऽपि अभिमत इति विरोधाभासोऽलङ्कारः।
आर्य्या जातिः ॥४॥

(झ) भगवन्निति। एवम् अनेन प्रकारेण प्रतारकत्वेनेत्यर्थः, उपालब्धस्य मयैव तिरस्कृतस्य, ते तव, मां प्रति अनुक्रोशो दया न जायत इति शेषः। तथा च दुःखेन तिरस्कृतो दुःखयिता दुःखितं प्रति दयां करोतीति रीतिस्त्वयि न दृश्यत इति भावः।

वृथैवेति। हे अनङ्ग! मया अजस्रं सर्वदा सङ्कल्पशतैः 'प्रियतमया शकुन्तलया सममेवं विचरिष्यामि इत्थञ्च विहरिष्यामि' एवम्भूताभिर्बहुतराशाभिः, त्वं वृथैव अनर्थकमेव, अतिवृद्धिम् अत्यन्तमभ्युदयम् अत्याधिक्यञ्च, नीतः प्रापितोऽसि; अनङ्गस्य सङ्कल्पजत्वात् सङ्कल्पबाहुल्ये अतिवृद्धेरेव सम्भवादित्याशयः। नन्वतिवर्द्धनस्य कथं वृथात्वमित्याह आकृष्येति। तथा च श्रवणोपकण्ठे कर्णसमीपे आकर्णमित्यर्थः, चापं धनुः, आकृष्य विद्यमानस्येति शेषः तव, मय्येव अतिवर्द्धयितारं मां प्रत्येव, बाणमोक्षः शरनिक्षेपः, युक्त उचितः, "उपकृतं बहु तत्र किमुच्यते" इत्यादिदर्पणोदाहरणवत्

(জ) অথবা, কামদেব যদি আমার উদ্দেশে সেই খঞ্জনদীর্ঘনয়না শকুন্তলাকে প্রহার করিয়া, আমাকে প্রহার করিতেন, তবে সর্ব্বদার জন্য, আমার মনের দুঃখ জন্মাইয়াও আমার অভিমত হইতেন ॥৪॥

(ঝ) হে মহিমান্বিত! এইরূপে তোমার তিরস্কার করিতেছি, তথাপি আমার প্রতি তোমার দয়া হইতেছে না।

(१) अयं श्लोकोऽपि क्वचिन्नास्ति।

सखेदं परिक्रम्य। क्व नु खलु निरस्तविघ्नैस्तपस्विभिरनुज्ञातः खिन्नमात्मानं विनोदयामि। न च प्रियादर्शनादृते शरणमन्यत्। यावदेनामन्विष्यामि। ऊर्द्ध्वमवलोक्य। इमामुग्रतपां वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना तत्रभवती शकुन्तला गमयति। भवतु, तत्रैव तावद्गच्छामि। परिक्रम्यावलोक्य च। अनया बालपादपवीथ्या सुतनुरचिरं गतेति तर्कयामि। कुतः—(१) (ञ)

विपरीतलक्षणया कथमपि न युक्त इत्यर्थः; वर्द्धनेन उपकर्त्तारं प्रति तादृशयत्किञ्चित् प्रत्युपकारस्यैव युक्तत्वादिति भावः।

अत्र अतिवर्द्धनात्मककारणकार्य्यस्य वैफल्यात् बाणाघातप्राप्तिरूपस्यानर्थस्य च सम्भवात् विषमालङ्कारः, अतिवर्द्धनस्य तथात्वं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्च; अनयोर्मिथो निरपेक्षतया संसृष्टिः।

तथा बाणमोक्षेण विपत्प्राप्त्या विरोधो नाम प्रतिमुखसन्धेरङ्गम्—"विरोधो व्यसनप्राप्तिः" इति दर्पणलक्षणात्।

आकृष्येत्यनन्तरं विद्यमानस्येत्यध्याहारात् नैकवक्तृकत्वहानिः।

उपजातिर्वृत्तम् ॥५॥

(ञ) सखेदमिति। सकामपीडमित्यर्थः। निरस्ता मयैव दूरीकृताः विघ्ना

হে কামদেব! সর্ব্বদা শত শত কামনাদ্বারা অনর্থক তোমাকে অত্যন্ত বর্দ্ধিত করিতেছি। কর্ণপর্য্যন্ত ধনু আকর্ষণ করিয়া, আমার প্রতিই তোমার বাণক্ষেপ করা উচিত হইতেছে ॥৫॥

(१) परिक्रम्य। क्व नु खलु संस्थिते कर्मणि सदस्यैरनुज्ञातः श्रमक्लान्तमात्मानं विनोदयामि। निश्वस्य। किं नु खलु मे प्रियादर्शनादृते शरणमन्यत्। यावदेनामन्विष्यामि। सूर्य्यमवलोक्य। इमामुग्रातपवेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति। तत्रैव तावद्गच्छामि।

सम्मीलन्ति न तावद्बन्धनकोषास्तयावचितपुष्पाः ।
क्षीरस्निग्धाश्चामी दृश्यन्ते किसलयच्छेदाः (१) ॥६॥

राक्षसकर्त्तृकयज्ञव्याघाता येषां तैः तपस्विभिः, अनुज्ञातः यथेष्टविचरणादावनुमतः अहम्, क्व कस्मिन् स्थाने; नु खलु, खिन्नं सन्तप्तम्, आत्मानं मनः, विनोदयामि आश्वासयामि। ननु पवनभ्रमणादिना विनोदयेत्याह न चेति। प्रियायाः शकुन्तलायाः दर्शनादृते साक्षात्कारं विना, अन्यत् किमपि शरणं सन्तापनिवर्त्तकतया रक्षकम् नास्तीति शेषः। एनां शकुन्तलाम्। उग्रं भीषणमत्यन्तमित्यर्थः यथा स्यात्तथा तपति सन्तापं जनयतीति ताम्, वेलां समयं मध्यन्दिनमित्यर्थः। लतावलयानि एषां सन्तीति तेषु लतामण्डपशालिषु तदभ्यन्तरे प्रविश्येति तात्पर्य्यम्, मालिन्याः नद्याः तीरेषु। गमयति अतिवाहयति। सुतनुः सुन्दरदेहा शकुन्तला, अनया दृश्यमानया, बालपादप-वीथ्या नूतनतरुश्रेण्या तदन्तर्गतपथेनेत्यर्थः, अचिरम् अनतिपूर्वम्।

अत्र विचारो नाम नाट्यलक्षणम्—"विचारो युक्तिवाक्यैर्यदप्रत्यक्षार्थसाधनम्" इति दर्पणलक्षणात्।

सम्मीलन्तीति। तया शकुन्तलया, अवचितानि सञ्चितानि पुष्पाणि येषां ते, अमी

(এ) (দুঃখের সহিত পাদক্ষেপ করিয়া) বিঘ্ন দূর হইলে পর, তপস্বীরা আমাকে যাইবার জন্য অনুমতি দিয়াছেন, এখন আমি সন্তপ্ত মনকে কোথায় যাইয়া আশ্বস্ত করি। শকুন্তলার দর্শন ভিন্ন অন্য কিছুই আমার সন্তাপনিবর্ত্তক হইবে না। সুতরাং উঁহাকেই অন্বেষণ করি। (উপরের দিকে চাহিয়া) সেই শকুন্তলা, সখীজনের সহিত, লতামণ্ডপ-সম্পন্ন মালিনীনদীর তীরে, প্রায়ই এই দারুণরৌদ্রসম্পন্ন সময় অতিবাহিত করিয়া থাকেন। হউক, সেইখানেই যাই। (পাদক্ষেপ করিয়া দেখিয়া) এই ছোট ছোট গাছগুলির ভিতর দিয়া সুন্দরী শীঘ্রই গিয়াছে বলিয়া মনে করি। কারণ—

(१) अयं पाठः क्वचिन्नास्ति।

স্পর্শং রূপয়িত্বা। অহো! প্রবাতসুভগোঽয়ং বনোদ্দেশঃ (১)। (ট)

শক্যোঽরবিন্দসুরভিঃ কণবাহী মালিনীতরঙ্গাণাম্ ।
অঙ্গৈরনঙ্গতপ্তৈর্নির্দয়মালিঙ্গিতুং পবনঃ (২) ॥৭॥

বন্ধনকোষা বৃন্তোপরিভাগাঃ, ন সম্মীলন্তি ইদানীমপি ন সঙ্কোচং প্রাপ্নুবন্তি। পুষ্পাবচয়াৎ বহুপূর্বং সময়ে তু সম্মীলন্ত্যেবেতি ভাবঃ। অমী কিসলয়চ্ছেদাঃ পল্লবখণ্ডানি চ, ক্ষীরস্নিগ্ধা নির্যাসেন সক্লেদাঃ দৃশ্যন্তে। বহুপূর্বং পল্লবচ্ছেদনে তু ক্ষীরশোষেণ রুক্ষতৈব স্যাদিতি ভাবঃ। তাবচ্ছব্দো বাক্যালঙ্কারে।

অত্র অপ্রস্তুতয়োরেব বন্ধনকোষ-কিসলয়চ্ছেদয়োরেকদর্শনক্রিয়য়া সহ কর্ম্মতয়া অভিসম্বন্ধাৎ তুল্যযোগিতালঙ্কারঃ; শকুন্তলয়া অচিরগমনপ্রতিপাদনকার্য্যং প্রতি উক্তবিধ-কারণদ্বয়োপন্যাসাৎ সমুচ্চয়শ্চ; অনয়োরেকাশ্রয়ানুপ্রবেশরূপঃ সঙ্করঃ।

আর্য্যা জাতিঃ ॥৬॥

(ট) স্পর্শমিতি। ত্বচি বায়োরনুভবমভিনীয়েত্যর্থঃ। অহো ইতি হর্ষে। প্রবাতেন শৈত্য-সৌগন্ধ্য মান্দ্যাত্মকগুণত্রয়শালিনা বায়ুনা, অয়ং বনোদ্দেশঃ বনৈকদেশঃ, সুভগো মনোহরঃ।

"সুন্দরেঽধিকভাগ্যে চ দুর্দ্দিনেতরবাসরে। তুরীয়াংশে শ্রীমতি চ সুভগঃ—" ইতি শব্দার্ণবঃ।

প্রবাতসুভগত্বং সমর্থয়তি শক্য ইতি। অনঙ্গতপ্তৈঃ অঙ্গৈর্মমৈব হস্তপদাদ্যবয়বৈঃ,

তিনি যে বোঁটা হইতে ফুল তুলিয়া নিয়াছেন, সে বোঁটাগুলি এখনও বুজিয়া যায় নাই এবং এই পল্লবখণ্ডগুলিকেও রসাক্ত দেখিতেছি ॥৬॥

(ট) (স্পর্শ অভিনয় করিয়া) ওহে! উৎকৃষ্ট বায়ু বহিত হইতে থাকায় বনের এই স্থানটী বড়ই মনোহর হইয়াছে।

(১) পরিক্রম্য সংস্পর্শং রূপয়িত্বা।… উদ্দেশঃ।

(২) শক্যমরবিন্দসুরভিঃ…। অবিরলমালিঙ্গিতুং…।

विलोक्य। हन्त! अस्मिन् वेतसलतामण्डपे सन्निहितया शकुन्तलया भवितव्यम्। तथाहि—(१) (ठ)

अभ्युन्नता पुरस्तादवगाढ़ा जघनगौरवात् पश्चात्।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥८॥

अरविन्दैः पद्मैः तत्स्पर्शैरित्यर्थः सुरभिः सौगन्ध्यवान्, तथा मालिन्या नद्यास्तरङ्गाणां कणवाही विन्दुधारी। अनेन विशेषणद्वयेन वायोः सौगन्ध्यं शैत्यञ्च दर्शितम्। पवनो वायुः, निर्दयं गाढं यथा स्यात्तथा, आलिङ्गितुं शक्यः मया पारयितव्यः। एतेन मान्द्यं सूचितम्, बलवद्वायोः कष्टकरतया आलिङ्गनकृत्यभावात्। अतएव एतद्वनोद्देशस्य सुभगत्वमित्याशयः। आर्य्या जातिः ॥७॥

(ठ) विलोक्येति। पदचिह्नावलीं दृष्ट्वेत्यर्थः। हन्तशब्दो हर्षे। हर्षश्च सन्निधाने शकुन्तलास्थित्यनुमानात्। वेतसलतामण्डपे मण्डपाकारताप्राप्तवेतसलतासमूहाभ्यन्तरे, सन्निहितया स्थितया।

अभ्युन्नतेति। पाण्डवः पाण्डुवर्णाः सिकता बालुका यस्मिन् तत्र, अस्य लतामण्डपस्य द्वारे, पुरस्तात् पदपङ्क्तेरेव अग्रदेशे, अभ्युन्नता गुल्फचिह्नापेक्षया किञ्चिदुन्नता, गुल्फ एव जघनगौरवस्य सञ्चारेण अङ्गुलीषु तत्सञ्चाराभावादिति भावः; तथा पश्चात् पदपङ्क्तेरेव पश्चाद्भागे गुल्फपातस्थाने इत्यर्थः, जघनस्य कटीसम्मुखभागस्य गौरवात् भारात्, जघनभारस्य समसूत्रपातेन गुल्फ एव सञ्चारादित्यर्थः, अवगाढा चिह्नसम्मुखापेक्षया किञ्चिद्गभीरा, अभिनवा सद्योजाता, इदानीमपि बालुकापाताद्यभावादिति भावः, पदपङ्क्तिः पादचिह्नश्रेणी दृश्यते। अन्येषां स्त्रीपुरुषाणामत्रागमना-

পদ্মস্পর্শে সুগন্ধ এবং মালিনীনদীর তরঙ্গকণবাহী এই বায়ুকে, কামসন্তপ্ত অঙ্গদ্বারা গাঢ় আলিঙ্গন করিতে পারিব ॥৭॥

(ঠ) (দেখিয়া) হায়! মণ্ডপাকার এই বেতসকুঞ্জের ভিতরে শকুন্তলা থাকিতে পারেন। কারণ—

(१) परिक्रम्यावलोक्य च। अस्मिन् वेतसपरिक्षिप्ते लतामण्डपे···।

यावद्विटपान्तरेणावलोकयामि। तथा कृत्वा सहर्षम्। अये! लब्धं नेत्रनिर्वाणम्। एषा मनोरथप्रिया मे सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामुपास्यते। भवतु, लताव्यवहितः शृणोमि विस्रब्धकथितान्यासाम्। इति विलोकयन् स्थितः (१)। (ङ)

दर्शनात् अनसूयाप्रियंवदयोश्च तादृशजघनगौरवाभावात् इयं पदपङ्क्तिः शकुन्तलाया एवेति भावः।

चरणस्य गुल्फ इव अङ्गुल्यग्रच्छेदे जघनभारसञ्चारासम्भवरूपहेतोः प्रत्यक्षतया 'अभ्युन्नता पुरस्तात्' इत्यत्र न निर्हेतुत्वदोषः। द्वारदेशस्य सिकतामयत्वाभावे पदचिह्न-पतनासम्भवात् सिकतानाञ्च साधारणशुभ्रवर्णत्वे प्रायेण छायासमानवर्णतया मण्डपस्य च्छायायां पदपङ्क्तेर्दर्शनासम्भवात् पाण्डुसिकते इति द्वारविशेषणम्, अतो नापि अपुष्टार्थत्वदोषः।

"न च प्रियादर्शनादृते शरणमन्यत्" इत्यारभ्य एतदन्ते सन्दर्भे परिसर्पो नाम प्रतिमुखसन्ध्यङ्गम्। यथा साहित्यदर्पणे—

"दृष्टनष्टानुसरणं परिसर्पश्च कथ्यते।"

आर्या जातिः॥८॥

(ङ) यावदिति। विटपान्तरेण तरुशाखाभ्यन्तरेण। अये इति हर्षे। नेत्र-निर्वाणं दिदृक्षताप्राप्तिजनितनेत्रतापानलशान्तिः। मनोरथेन अभिलाषमात्रेणैव न पुनः सङ्गमपर्यन्तेनापीत्यर्थः: प्रिया प्रीतिकरा शकुन्तला, कुसुमास्तरणेन पुष्पशय्यया सहेति सकुसुमास्तरणम्, शिलापट्टं प्रस्तरफलकम्, अधिशयाना आश्रित्य पातितदेहा, सखीभ्यामनसूयाप्रियंवदाभ्याम्, उपास्यते परिचर्य्यते। लतया व्यवहितः अन्तरितदेहः,

ইহার দ্বারে শুভ্র বালুকারাশির উপরে, সম্মুখে উন্নত এবং জঘন-দেশের ভারবশতঃ পশ্চাদ্ভাগে গভীর নূতন পদচিহ্নশ্রেণী দেখিতেছি॥৮॥

(१)···परिक्रम्य तथा कृत्वा सहर्षम्।···एषा मे मनोरथप्रियतमा सखीभ्या-मन्वास्यते। भवतु, श्रोष्यामि आसां विस्रब्धकथितानि।

ততঃ প্রবিশতি যথোক্তব্যাপারা সহ সখীভ্যাং শকুন্তলা। (ঢ)

সখ্যৌ। উপবীজ্য। হলা সউন্তলে! অবি সুহাঅদি দে ণলিণীবত্তবাদো?। (ণ)

(ণ) হলা শকুন্তলে! অপি সুখয়তি তে নলিনীপত্রবাতঃ?।

আসাং শকুন্তলানসূয়াপ্রিয়ংবদানাম্, বিশ্রব্ধকথিতানি স্বৈরালাপান্। আত্মপ্রকাশে তু আলাপবন্ধো ভাবগোপনং বা ভবেদিতি ভাবঃ।

শিলাপট্টমিতি "আধারোঽধিশীঙ্স্থাসাং কর্ম্ম" ইত্যধিকরণে কর্ম্মত্বম্।

(ঢ) তত ইতি। যথোক্তব্যাপারা সখীভ্যাং পরিচর্য্যমাণা শিলাপট্টমধিশয়ানা চ, প্রবিশতি সভ্যানাং দৃষ্টিগোচরীভবতি। এবঞ্চ তস্থলে বিশ্ধাতোঃ সভ্যদৃষ্টিগোচরত্বে লক্ষণা। অতঃ শয়ানায়াঃ স্বয়ং প্রবেশো নানুপপন্ন ইতি ধ্যেয়ম্।

অত্র শকুন্তলাদিভিঃ সহ রাজ্ঞো মেলনাত বর্ণসংহারো নাম প্রতিমুখসন্ধ্যঙ্গম্— "চাতুর্বর্ণ্যোপগমনং বর্ণসংহার ইষ্যতে" ইতি ভরতলক্ষণে "চাতুর্বর্ণ্যোপগমনং পাত্রাণাং মেলনম্" ইত্যভিনবগুপ্তব্যাখ্যানাত্।

(ণ) সখ্যাবিতি। অপিশব্দঃ প্রশ্নে। নলিনীপত্রবাতঃ পদ্মলতাপত্রসঞ্চালনজনিতবায়ুঃ, তে তব, সুখয়তি সুখং করোতি তাপং শময়তি কিমিত্যর্থঃ।

(ড) এই তরুশাখার ভিতর দিয়া দেখি। (তাহা করিয়া আনন্দের সহিত) ওহে! আমি চোখের শান্তি লাভ করিয়াছি। এই আমার প্রাণের প্রিয়তমা, পুষ্পশয্যাসমন্বিত প্রস্তরফলকের উপরে অবস্থান করিতেছেন, আর সখীরা পরিচর্য্যা করিতেছে। হউক, লতার অন্তরালে থাকিয়া, ইঁহাদের বিশ্বস্তালাপ শুনি। (এই বলিয়া দর্শন করতঃ দাঁড়াইয়া রহিলেন।)

(ঢ) (তদনন্তর সখীজনের সহিত উক্তবিধ অবস্থায় শকুন্তলার প্রবেশ।)

शकु। सखेदम्। किं वीजअन्ति मं पिअसहीओ (१)। (त)

सख्यौ। सविषादं परस्परमवलोकयतः (२)। (थ)

राजा। बलवदसुस्थशरीरा तत्रभवती दृश्यते। सवितर्कम्। तत् किमयमातपदोषः स्यात्, उत यथा मे मनसि वर्त्तते। साभिलाषं निर्वर्ण्य। अथवा, कृतं सन्देहेन (३)। (द)

(त) किं वीजयतो मां प्रियसख्यौ।

(त) शकु इति। विफलमिदं वीजनं तापशान्त्यभावादिति भावः।

अत्र सख्योरनुनयाग्रहणात् विधूतं नाम प्रतिमुखसन्धेरङ्गम्। यथा दर्पणे—

"कृतस्यानुनयस्यादौ विधूतं त्वपरिग्रहः।"

न चैवम्, "अलं वो अन्तेउर" इत्यादिना शकुन्तलादेव दर्पणे दत्तोदाहरणेन सह विरोध इति वाच्यम्, दर्पणकृतैव क्रमाव्यत्यगर्भसन्ध्यङ्गलक्षणे "अलं वो अन्तेउर" इत्यादितः पूर्ववर्त्तिनः "स्थाने खलु विस्मृतनिमेषेण चक्षुषा" इत्यादिशाकुन्तलप्रबन्धस्यैव लक्ष्यतया उदाहृतात् तस्यैव च भ्रमनिश्चयात्। पूर्वस्य प्रतिमुखसन्धिः परस्य गर्भसन्धिः एवञ्च पूर्वांशस्य गर्भसन्ध्यङ्गत्वे परांशस्य च प्रतिमुखसन्ध्यङ्गत्वे सन्धिसाङ्कर्य्यं स्यादिति सुधीभिर्भाव्यम्।

(थ) सख्याविति। वायुना शान्त्यभावात् अन्तस्ताप एवायम्, तस्य च शान्त्युपायो दुष्कर एवेति सूचनार्थं परस्परावलोकनम्।

(ণ) সখীরা। (বাতাস করিয়া) ওলো শকুন্তলা! পদ্মপাতার বাতাস তোমার শান্তি জন্মাইতেছে ত ?।

(ত) শকুন্তলা। (খেদের সহিত) তোমরা কেন আমাকে বাতাস করিতেছ।

(থ) সখীরা। (বিষাদের সহিত পরস্পর দর্শন করিতে লাগিল।)

(१)…सहीओ। (२) विषादं नाटयित्वा।

(३) बलवदसुस्थशरीरा शकुन्तला दृश्यते। विचिन्त्य।

स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं
प्रियायाः साबाधं तदपि कमनीयं वपुरिदम् (१)।
समस्तापः कामं मनसिजनिदाघप्रसरयोः
न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥८॥

(८) राजेति। बलवत् अत्यन्तम् अस्वस्थं शरीरं यस्याः सा। आतपदोषः रविकिरणजनितसन्तापः। उत अथवा, यथा मे मनसि वर्त्तते कामसन्ताप एवाय-मिति यदहं सम्भावयामि, तथैव स्यादित्यर्थः। साभिलाषं शकुन्तलायां सस्पृहम्, निर्वर्ण्य दृष्ट्वा। सन्देहेन अयमातपदोषः कामसन्तापो वा इति संशयेन, कृतम् अलम्।

"कृतं युगेऽलमर्थे च" इति मेदिनी।

ननु कुतः सन्देहाभावः इत्याह स्तनेति। स्तनयोः न्यस्तं तापशान्त्यै दत्तम् उशीरं वीरणमूलकृतानुलेपनं यस्य तत् तादृशम्, तथा प्रशिथिलं शरीरस्य कृशत्वात् श्लथीभूतं मृणालमिव एकं केवलं वलयं यत्र तत् तथोक्तम्, प्रियायाः शकुन्तलायाः, इदं वपुः शरीरम्, आबाधया सम्यक् पीडया सहेति साबाधम्, वर्त्तते इति शेषः, तापशान्त्यु-पायानुष्ठानादिति भावः ; तदपि तथापि, कमनीयं मनोहरम्। तथापि कामग्रीष्मयो-स्तापसाम्यमङ्गीकृत्य व्यतिरेकेण कामस्यैवायं ताप इत्यनुमिनोति सम इति। मनसिज-निदाघप्रसरयोः कामप्रादुर्भाव-ग्रीष्मप्रादुर्भावयोः, स तापो दाहः, समः समानः, कामम् इति मतानुमतमङ्गीकृतमित्यर्थः ; तु किन्तु, युवतिषु विषये, ग्रीष्मस्य निदाघस्य, एवमित्थम् सुभगं सौन्दर्य्यजनकत्वात् सुन्दरम्, अपराद्धं परस्य तापकष्टजननादपराधः, न भवतीति शेषः। अतः पारिशेष्यात् कामताप एवायमिति नोक्तसन्देह इत्याशयः।

(দ) রাজা। শকুন্তলাকে অত্যন্ত অসুস্থশরীরা দেখিতেছি। (বিতর্কের সহিত) তবে কি ইহা রৌদ্রের দোষ? না, আমার মনে যাহা লইতেছে?। (অভিলাষের সহিত দেখিয়া) অথবা সন্দেহ করিবার প্রয়োজন নাই।

(१)···शिथिलितमृणालैकवलयम्।···किमपि कमनीयम्।

প্রিয়ং। জনান্তিকম্। অণসূএ! তস্স রাএসিণো পঢ়মদংসণাদো আরম্ভিঅ পজ্জুস্কু অমণা সউন্তলা; ণ কৃখু সে অম্মণিমিত্তো আতঙ্কো ভবে (১)। (ধ)

(ধ) অনসূয়ে! তস্য রাজর্ষেঃ প্রথমদর্শনাদারভ্য পর্য্যুৎসুকমনাঃ শকুন্তলা; ন খলস্যা অন্যনিমিত্ত আতঙ্কো ভবেৎ।

অত্র শকুন্তলাদেহস্য সতাপত্বনিরূপণকার্য্যং প্রতি অনন্যতৌগ্রীষ্মত্বরূপে একস্মিন্ কারণে সত্যপি প্রশিথিলমৃণালৈকবলয়ত্বরূপকারণান্তরোপন্যাসাৎ সমুচ্চয়ালঙ্কারঃ, তথা সুন্দরত্বাদিরূপকারণাভাবেঽপি কমনীয়তারূপকার্য্যোৎপত্তেঃ কিং বিভাবনা? কিংবা বাবাধত্বরূপকারণে সত্যপি কুরূপত্বরূপকার্য্যানুৎপত্তের্বিশেষোক্তিরিতি বিভাবনাবিশেষোক্ত্যোঃ সন্দেহসঙ্কর ইত্যুভয়োঃ পরস্পরনিরপেক্ষতয়া সংসৃষ্টিঃ। সাক্ষাৎপ্রতিপাদকাভাবাদনুমানালঙ্কারস্তু ব্যজ্যত ইতি বস্তুনালঙ্কারধ্বনিঃ।

"কামমস্যানুমতৌ প্রকামেঽনুমতাবপি" ইতি হেমচন্দ্রঃ।

শিখরিণী বৃত্তম্ ॥৯॥

(ধ) প্রিয়মিতি। তস্য রাজর্ষের্দুষ্মন্তস্য। পর্য্যুৎসুকমনাঃ কামেন উৎকণ্ঠিতচিত্তা। আতঙ্কস্তাপঃ। আধীপালমালোচ্যৈব মযেদং সম্ভাব্যত ইতি ভাবঃ।

"রুক্‌তাপশঙ্কাস্বাতঙ্কঃ" ইত্যমরঃ।

স্তনে বিণ্যার মূলের অনুলেপন দেওয়া হইয়াছে, মৃণালের একটী বলয় অত্যন্ত শিথিল হইয়াছে এবং অত্যন্ত সন্তাপ চলিতেছে; তথাপি প্রিয়তমার এই দেহখানি সুন্দর দেখা যাইতেছে। কামাবির্ভাব এবং গ্রীষ্ম—এই উভয়েরই সন্তাপ সমান, ইহা আমি স্বীকার করি, কিন্তু যুবতিগণের প্রতি গ্রীষ্মের এইরূপ সুন্দর অপরাধ হইতে পারে না ॥৯॥

(ধ) প্রিয়ংবদা। (অনসূয়ার প্রতি চুপি চুপি) অনসূয়া! সেই

(১)…পজ্জুস্কুআ বিঅ সউন্তলা। কিং ণ কৃখু সে তন্নিমিত্তো অঅং আতঙ্কো ভবে।

अन। सहि! मम वि एआरिसी आसङ्का हिअअस्स। भोदु, पुच्छिस्सं दाव णं। प्रकाशम्। सहि! पुच्छिदव्वासि किम्पि। बलीओ क्खु दे अङ्गाणं सन्दावो। (न)

राजा। वक्तव्यमेव (१)। (प)

शशिकरविशदान्यस्यास्तथाहि दुःसहनिदाघशंसीनि।
भिन्नानि श्यामिकया मृणालनिर्म्माणवलयानि (२) ॥१०॥

(न) सखि। ममापि एतादृशी आशङ्का हृदयस्य। भवतु, प्रक्ष्यामि तावदिमाम्। सखि। प्रष्टव्यासि किमपि। बलीयान् खलु ते अङ्गानां सन्तापः।

(न) अनेति। एतदपि जनान्तिकमेवेति बोध्यम्, परत्र प्रकाशमित्यभिधानात्। एतादृशी त्वदुक्तरूपा आशङ्का सन्देहः। खलु यस्मात्। बलीयान् अतीवप्रबलः। अतः प्रष्टव्यासीत्यन्वयः।

(प) राजेति। वक्तव्यमेव प्रष्टव्यमेवेत्यर्थः।

वक्तव्यत्वसाधनायाह शशीति। तथाहि तमेवार्थं जानीहि। "तथेत्यगणपरिपठितौ धातुगतौ, तस्य हौ प्रयोगः" इति कातन्त्रपरिशिष्टटीकायां गोपीनाथः।

রাজর্ষির প্রথম দর্শন হইতে আরম্ভ করিয়া, শকুন্তলা উৎকণ্ঠিত চিত্তা হইয়াছেন, ইঁহার এই সন্তাপ অন্য কারণ হইতে হইবে বলিয়া বোধ হয় না।

(ন) অনসূয়া। সখি! আমার মনেরও এইরূপই আশঙ্কা। হউক, ইঁহাকে জিজ্ঞাসা করি। (প্রকাশ্যে) সখি! তোমাকে কোন বিষয় জিজ্ঞাসা করিব; যে হেতু তোমার অঙ্গের সন্তাপ, বড়ই বেশী বলিয়া বোধ হইতেছে।

(প) রাজা। অবশ্যই জিজ্ঞাসা করা উচিত।

(१) क्वचिदयं पाठो नास्ति। (२) क्वचिदेव श्लोकोऽपि न दृश्यते।

শকু। পূর্ব্বার্দ্ধেন শয়নাদুত্থায়। হলা! ভণ, জং বত্তুকামাসি (১)। (ফ)

অন। হলা সউন্তলে! অলব্‌ভন্তরা অহ্মে দে মণোগদস্স বুত্তন্তস্স; কিন্তু জাদিসী ইদিহাসকধাণুবন্ধেসু কামিঅণাণং অবত্থা সুণীঅদি, তাদিসী তুহ ত্তি তক্কেমি।

(ফ) হলা! ভণ, যৎ বক্তুকামাসি।

(ব) হলা শকুন্তলে! অলব্ধান্তরা বয়ং তে মনোগতস্য বৃত্তান্তস্য; কিন্তু যাদৃশী ইতিহাসকথানুবন্ধেষু কামিজনানামবস্থা শ্রূয়তে; তাদৃশী তবেতি তর্কয়ামি। তৎ শশিকরবৎ চন্দ্ররশ্মিবৎ বিশদানি স্বভাবত এব ধবলানি, অস্যাঃ শকুন্তলায়াঃ, মৃণালেন নির্ম্মাণং যেষা তানি মৃণালনির্ম্মাণানি তানি চ তানি বলয়ানি চেতি তানি, শ্যামিকয়া স্বস হৃষ্টগাবতাপজনিতকালিম্না, ভিন্নানি যুক্তানি সন্তি, দুঃসহং নিদাঘং তাপং শংসন্তি সূচয়ন্তীতি তানি তথাভূতানি জাতানীতি শেষঃ। অতো বক্তব্যমেবেতি ভাবঃ।

অব শশিকরবিশদানীতি লুপ্তোপমা, তন্নৃতবিচ্ছিত্ত্যা চ শকুন্তলাঙ্গানি তাপবন্তি তজ্জনিতশ্যামিকাশালিমৃণালবলয়বত্ত্বাদিতি জ্ঞানাদনুমানালঙ্কারঃ।

আর্য্যা জাতিঃ ॥১০॥

(ফ) শকু ইতি। পূর্ব্বার্দ্ধেন দেহপূর্ব্বভাগেন, শয়নাৎ শয্যাতঃ। কামক্লান্ততয়া সর্ব্বদেহচালনাসামর্থ্যাৎ পূর্ব্বার্দ্ধেনেত্যুক্তম্। ভণ ব্রূহি। বক্তুং কাম ইচ্ছা যস্যাঃ সা বক্তুকামা। "তুমঃ কামমনসোঃ" ইতি তুমো মলোপঃ।

কারণ, চন্দ্রকিরণের ন্যায় শুভ্রবর্ণ ইঁহার মৃণালবলয়গুলি, কাল হইয়া, দুঃসহ সন্তাপের সূচনা করিতেছে ॥১০॥

(ক) শকুন্তলা। (দেহের সম্মুখভাগদ্বারা শয্যা হইতে একটু উঠিয়া) ওলো! বল, যাহা বলিতে ইচ্ছা করিয়াছ।

(১)···পূর্ব্বার্দ্ধেন পুষ্পশয্যামুদস্য। হলা! কিং বক্তুকামাসি?।

তা কধেহি কিং ণিমিত্তং দে অঅং আআস ত্তি। বিআরং পরমত্থদো অআণিঅ অণারম্ভো কিল পদীআরস্স (১)। (ব)

রাজা। অনসূয়য়াপি মদীয়স্তর্কোঽবগতঃ (২)। (ভ)

কথয় কিং নিমিত্তং তে অয়ম্ আয়াস ইতি। বিকারং পরমার্থতঃ অজ্ঞাত্বা অনারম্ভঃ কিল প্রতীকারস্য।

(ব) অনেতি। ন লব্ধং ন প্রবিষ্টম্ অন্তরং মধ্যং যাভিস্তা অনভিজ্ঞা ইত্যর্থঃ, ত্বয়া অপ্রকাশিতত্বাদিত্যর্থঃ। ইতিহাসকথায়াঃ পুরাবৃত্তোপাখ্যানস্য অনুবন্ধেষু পরম্পরাসু। তর্কয়ামি সম্ভাবয়ামি। আয়াসঃ শ্রমঃ পীড়েত্যর্থঃ। পরমার্থতো যথার্থরূপেণ, বিকারং রোগম্। প্রতীকারস্য চিকিৎসায়াঃ অনারম্ভঃ অপ্রবৃত্তিঃ, রোগং জ্ঞাত্বৈব তচ্চিকিৎসায়ামারম্ভঃ সম্ভবতীতি রোগং কথয়েতি ভাবঃ।

(ভ) রাজেতি। তর্কঃ সম্ভাবনা। মম যাদৃশী সম্ভাবনা তাদৃশীং সম্ভাবনাং কৃত্বৈব ইত্থং পৃচ্ছত ইত্যর্থঃ।

(ব) অনসূয়া। শকুন্তলা! আমরা তোমার মনের বৃত্তান্তের ভিতরে প্রবেশ করিতে পারি নাই; কিন্তু তথাপি ঐতিহাসিক উপাখ্যানে কামিলোকের যেরূপ অবস্থা শুনিতে পাই, তোমারও সেইরূপ অবস্থা হইয়াছে ইহা মনে করিতেছি। অতএব বল, তোমার এই পীড়ার কারণ কি। যথার্থরূপে রোগ না জানিয়া প্রতীকার আরম্ভ করিতে পারা যায় না।

(ভ) রাজা। অনসূয়াও, আমার মনের ধারণা অবগত হইয়াছে।

(১) অলদ্ধন্তরা কখু অম্হে মঅণগঅস্স বুত্তন্তস্স। কিন্তু জারিসী ইদিহাস-ণিবন্ধেসু কামঅমাণাণং অবত্থা সুণীঅদি তারিসিং দে পেক্খামি। শকুন্তলা।

(২) অনসূয়য়াপ্যনুগতো মদীয়স্তর্কঃ। নহি স্বাভিপ্রায়েণ মে দর্শনম্।

शकु । बलीओ आआसो, ण सक्कणोमि सहसा णिवे-दिदुं (१) । (म)

प्रियं । सुट्ठु क्खु एसा भणादि, किं एदं अत्तणो उवद्दवं णिगूहसि, अणुदिअसं क्खु परिहीअसि । अङ्गेसुं लावण्णमई छाआ केवलं तुमं ण मुञ्चदि (२) । (य)

(म) बलीयानायासः, न शक्नोमि सहसा निवेदयितुम् ।

(य) सुष्ठु खल्वेषा भणति, किमेतमात्मन उपद्रवं निगूहसि, अनुदिवसं खलु परिहीयसे । अङ्गेषु लावण्यमयी छाया केवलं त्वां न मुञ्चति ।

(म) शकु इति । बलीयान् अतीवप्रबलः, आयासः पीड़ा ; अतएव न शक्नो-मीत्यर्थः । किञ्चित्स्वास्थ्योपस्थितौ निवेदयामीति भावः ।

(य) प्रियमिति । एषा शकुन्तला, सुष्ठु युक्तियुक्तत्वात् भद्रम् । उपद्रवं पीड़ाम्, निगूहसि गोपयसि । नैतदुचितमित्याह अन्विति । अनुदिवसं प्रतिदिनम्, परिहीयसे क्रमशः क्षीणदेहा भवसि । छाया कान्तिः । न मुञ्चति न परित्यजति स्वभावसुन्दरत्वा-दिति भावः ।

"छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः ।

"मुक्ताफलस्य छायायां तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" इत्युज्ज्वलनीलमणिः ।

(म) শকুন্তলা। পীড়া অতিপ্রবল হইয়াছে ; সুতরাং হঠাৎ বলিতে পারিতেছি না।

(য) প্রিয়ংবদা। শকুন্তলা ভালই বলিতেছে। কেন নিজের

(१) आत्मगतम् । बलव क्खु मे अहिलासे मा दाणिं वि सहसा एदाणं ण सक्कणोमि णिएदिउं ।

(२) सहि ! सुट्ठु एसा भणइ । किं अत्तणो आतङ्कं उवेक्खसि ।

राजा । अवितथमाह प्रियंवदा । तथाहि—(र)

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनक्लानेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥११॥

(र) राजेति । अवितथम् अमिथ्या सत्यमित्यर्थः, आह अनुदिवसं खलु परिहीयसे इति ब्रवीति । तत् सत्यत्वं प्रतिपादयितुमाह तथाहीति ।

क्षामेति । आननं शकुन्तलाया वदनम्, क्षामक्षामौ अतीवक्षीणौ कपोलौ गण्डौ यस्य तत् तादृशम्; उरो वक्षःस्थलम्, काठिन्येन मुक्तौ रहितौ स्तनौ यस्य तत् तथोक्तम्; मध्यः कटिदेशः, क्लान्ततरः नितान्तदुर्बलः; अंसौ स्कन्धौ, प्रकामविनतौ अतीवावनतौ; छविर्देहकान्तिः, पाण्डुरा पाण्डुवर्णा; अतएव मदनक्लाना काम-प्रादुर्भावक्लान्ता, इयं शकुन्तला; पत्राणां पर्णानाम्, शोषयतीति शोषणस्तेन, मरुता वायुना, स्पृष्टा माधवी लता इव, शोच्या शोचनीया शोचनीया च, प्रियं प्रीतिकरं दर्शनं यस्याः सा तादृशी च; आलक्ष्यते दृश्यते । अतः "अणुदिवसं क्खु परिहीअसि । अङ्गेसु लावण्णमई छाआ केवलं तुमं ण मुञ्चदि" इति प्रियंवदया यदुक्तं तदवितथमेवेति भावः ।

अत्र प्रियंवदोक्तिसमर्थनकार्यं प्रति आननक्षामक्षामकपोलत्वादिबहुतरकारणोप-न्यासात् समुच्चयोऽलङ्कारः श्रौतोपमा च अनयोर्मिथो निरपेक्षतया संसृष्टिः । तथा एकवचनान्तप्रयोगमध्ये अंसौ इति द्विवचनान्तप्रयोगात् भग्नप्रक्रमता दोषः; स च 'प्रकामविनतः स्कन्धः' इति पाठेन समाधेयः; तथात्वेऽपि "नेत्रं समुन्मीलय" इत्यादिवत् द्वित्वेऽपि जात्यपेक्षया एकवचनोपपत्तिः ।

উপদ্রব গোপন করিতেছ? প্রতিদিন ক্ষীণ হইয়া যাইতেছ, কিন্তু অঙ্গের লাবণ্যময়ী কান্তি কেবল তোমাকে ত্যাগ করিতেছে না।

(র) রাজা। সত্য কথাই বলিয়াছে। কারণ—

शकु । निश्वस्य । कस्स वा अस्सस्स कधइस्सं, किन्तु आआस-हेतुआ वो भविस्सं (१) । (ल)

उभे । सहि ! अदो ज्जेव णिब्बन्धो । सिणिद्धजण-संविभत्तं क्खु दुक्खं सज्जवेअणं भोदि (२) । (व)

(ल) कस्य वा अन्यस्य कथयिष्यामि, किन्तु आयासहेतुका वो भविष्यामि ।

(व) सखि ! अतएव निर्बन्धः । स्निग्धजनसंविभक्तं खलु दुःखं सह्यवेदनं भवति ।

---

श्यामश्यामेति श्यै धातोः "श्यैस्त्युषिपचां मकवाः" इति मप्रत्ययः "प्रकारे गुणवचनस्य" इति द्विर्वचनञ्च ।

शार्दूलविक्रीड़ितं वृत्तम् ॥११॥

(ल) शकु इति । अन्यस्य युवां विना अपरस्य, कस्य जनस्य वा समीपे कथयिष्यामि कस्यापि नेत्यर्थः ; मम युवयोस्तुल्यापरबन्धुजनाभावादिति भावः । आयासहेतुका परिश्रमहेतुभूता । वो युष्माकम् ।

(व) उभे इति । अनसूयाप्रियंवदे द्वे एव एतद्वदत इत्यर्थः । अतएव अन्य-

---

শকুন্তলার মুখমণ্ডলের গণ্ডযুগল অতিশয় ক্ষীণ হইয়াছে ; বক্ষঃস্থলের স্তন দুইটী অতিশয় কাঠিন্য ত্যাগ করিয়াছে ; কটিদেশ অত্যন্ত ক্লান্ত হইয়াছে। স্কন্ধদ্বয় অতিশয় অবনত হইয়াছে এবং দেহের কান্তি পাণ্ডুরবর্ণ হইয়াছে। অতএব পত্রশোষণকারী বায়ুকর্ত্তৃক সংস্পৃষ্ট মাধবী লতার ন্যায়, এই কামপীড়িতা শকুন্তলাকে শোচ্যা অথ চ প্রিয়-দর্শনা বলিয়া লক্ষ্য করিতেছি ॥১১॥

(ল) শকুন্তলা। ( নিশ্বাস ত্যাগ করিয়া ) অন্য কাহার নিকটেই বা বলিব ; কিন্তু তোমাদের পরিশ্রমের কারণ হইব।

---

(१) सहि ! कस्स । आआसइत्तिआ दाणिं वो भविस्सं ।

(२) क्वचित् सहि ! इति नास्ति ।

राजा। पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम्।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रोत्तरश्रवणकातरतां गतोऽस्मि (१) ॥१२॥

स्यान्तिके अकथनीयतया अभिन्नहृदयत्वेन आवयोरन्तिके कथनीयत्वादेव, निर्बन्धः तव दुःखं श्रोतुमावयोराग्रहातिशयः। खलु यस्मात्, स्निग्धजनेषु बन्धुलोकेषु, संविभक्तं सम्यक् विभज्य अर्पितम्, दुःखम्, सह्या सोढुं शक्या वेदना यातना यस्य तत् तादृशं भवति ; बहुभिरुह्यमानो भार इवेति भावः। इत्यन्तः प्रतिमुखसन्धिः।

पृष्टेति। समे तुल्ये दुःखसुखे यस्य तेन तादृशेन, जनेन अनेन सखीद्वयेनेत्यर्थः, पृष्टा स्वयातनाप्रकाशाय जिज्ञासिता, इयं बाला अल्पवयाः शकुन्तला, मनोगतम् आधेर्मानसिकपीडाया हेतुं कारणम्, न वक्ष्यति न प्रकाशयिष्यति इति न, सखीनिर्बन्धेन अवश्यमेव वक्ष्यतीत्यर्थः। किन्तु अनया शकुन्तलया, विवृत्य परिवृत्य, सतृष्णं साभिलाषं यथा स्यात्तथा, बहुशो वारं वारम्, दृष्टोऽपि प्रथमदिन एवावलोकितोऽपि अहम्, अत्र इदानीम्, उत्तरस्य सखीजिज्ञासायाः प्रतिवाक्यस्य श्रवणाय कातरतामस्थिरताम्, गतोऽस्मि ; पूर्वं तथा साभिलाषदर्शनात् किं मामुद्दिश्यैव मन्मथेनाकुलीकरणादियमवस्था ? अथवा कारणान्तरादिति सन्देहनिरासाय अधीरीभूतोऽस्मीति भावः।

अत्र कारणाभावेऽपि कातरतारूपकार्य्योत्पत्तेः किं विभावना, किंवा साभिलाषबहुतरदर्शनरूपकारणे सत्यपि स्वोद्देश्यककामनिबन्धनैतदवस्थानिर्णयरूपतत्कार्य्यानुत्पत्तेर्विशेषोक्तिरिति सन्देहाद्विभावनाविशेषोक्त्योः सन्देहसङ्करालङ्कारः।

(ব) সখীদ্বয়। সখি! এই জন্যই ত অত্যন্ত আগ্রহ করিতেছি। কারণ, বন্ধুজনের উপর দুঃখ ভাগ করিয়া দিলে, তাহার বেদনা সহ্য হইয়া থাকে।

(१) अत्रान्तरे श्रवणकातरतां।

শকু। জদো পহুদি তবোবণরক্খিদা সো রাএসী মম দংসণপধং গদো। ইত্যর্দ্ধোক্তেন লজ্জাং নাটয়তি (১)। (শ)

"কাকময়ূরো" ইত্যাদিবৎ "যস্মাশ্রিতং হর্ষ্যাং" ইত্যস্য ব্যভিচারাৎ দুঃখসুখেতি দুঃখশব্দস্য পূর্ব্বনিপাতঃ।

বসন্ততিলকা বৃত্তম্।

ইত্যাদিতৃতীয়াঙ্কসমাপ্তিপর্য্যন্তো গর্ভসন্ধিঃ। তথা চাত্র "পৃষ্টা জনেন" ইত্যাদিনা শকুন্তলায়া অনুরাগসত্ত্বে তত এব তৎপ্রাপ্তৌ দুষ্মন্তস্য উপায়শঙ্কা; তথা "অবহীরণা-ভীরুঅং বেবদি হিঅঅং" ইত্যনেন শকুন্তলায়া দুষ্মন্তপ্রাপ্তৌ অপায়শঙ্কা, ইত্যুভাভ্যা-মুভয়োঃ পাক্ষিকপ্রাপ্তিসম্ভাবনাকরণাৎ প্রাপ্ত্যাশা নাম তৃতীয়া কার্য্যাবস্থা নিবদ্ধা। তথা চ দর্পণে—"উপায়াপায়শঙ্কাভ্যাং প্রাপ্ত্যাশা প্রাপ্তিসম্ভবঃ।"

এবং দুষ্মন্তশকুন্তলয়োঃ সম্মেলনমেব ফলম্, তস্য চ প্রধানোপায়ঃ পরস্পরানুরাগঃ, স চ পূর্ব্বং কথঞ্চিদুদ্ভিন্নঃ, অত্র তু সম্যগেব উদ্ভিন্নঃ; তথা "পৃষ্টা জনেন" ইত্যাদিনা "অবহীরণাভীরুঅং বেবদি হিঅঅং" ইত্যনেন চ উভয়োরেবানুরাগস্য সন্দেহকৃতো হ্রাসঃ; এবমুভয়োরেব উভয়ান্বেষণং স্ফুটম্; পুনশ্চ "ণ মাণণীএসুং জণসুং অপ্পাণং অবরাহ-ইস্সং" "ধিগ্ ব্রীড়িতোঽস্মি" ইত্যেতাভ্যাং হ্রাসঃ, তথৈব অন্বেষণঞ্চ স্পষ্টমেবেতি। যথা দর্পণে—

"ফলপ্রধানোপায়স্য প্রাগুদ্ভিন্নস্য কিঞ্চন।
গর্ভো যত্র সমুদ্ভেদো হ্রাসান্বেষণবান্ মুহুঃ॥"

অস্য চ অভূতাহরণাদীনি ত্রয়োদশাঙ্গানি যথাস্থানং নিবিশ্য লক্ষণানি বক্ষ্যামঃ॥১২॥

রাজা। যাহাদের সুখ ও দুঃখ সমান, সেই সখীরা জিজ্ঞাসা করিয়াছেন, তাহাতে এই বালিকা যে মনঃপীড়ার কারণ বলিতেছেন না এমন নহে। কিন্তু ইনি ফিরিয়া ফিরিয়া বহুবার আমাকে দেখিয়াছিলেন; সুতরাং এখন উত্তর শুনিবার জন্য অধীরতা প্রাপ্ত হইতেছি॥১২॥

(১) সখি! যদা প্রভৃতি মম দর্শনপথং আগতঃ স তপোবনরক্ষিতা রাজর্ষিঃ, তদা আরভ্য তদগতেন অভিলাষেণ এতদবস্থাস্মি সংবৃত্তা।

उभे। कधेदु कधेदु पिअसही (१)। (ष)

शकु। तदो पहुदि तग्गदेण अहिलासेण एआवदवत्थह्मि संवुत्ता (२)। (स)

उभे। दिट्ठिआ दे अणुरूए वरे अहिलासो ; अधवा सामरं उज्झिअ कहिं महाणईए पविसिदव्वं (३)। (ह)

(श) यतः प्रभृति तपोवनरक्षिता स राजर्षिर्मम दर्शनपथं गतः ।

(ष) कथयतु कथयतु प्रियसखी ।

(स) ततः प्रभृति तद्गतेन अभिलाषेण एतावदवस्थास्मि संवृत्ता ।

(ह) दिष्ट्या ते अनुरूपे वरे अभिलाषः । अथवा सागरम् उज्झित्वा कुत्र महानद्या प्रवेष्टव्यम् ।

(श) शकु इति । स राजर्षिर्दुष्मन्तः । 'तदो पहुदि' इत्यादि वक्ष्यमाणापेक्षया अस्य अर्द्धत्वं बोध्यम् । लज्जां नाटयति अभिनयति, सुरतविषयकत्वादित्याशयः ।

(स) शकु इति । सा गतस्तद्गतस्तेन दुष्मन्तविषयकेणेत्यर्थः, अभिलाषेण रन्तुमिच्छया, एतावती अवस्था दशा यस्याः सा ।

अत्र गुप्तविषयस्य प्रकाशनात् चित्रिर्नाम गर्भसन्धेरङ्गम् । यथा दर्पणे—

"रहस्यार्थस्य तूद्भेदः क्षिप्तिः स्यात् ।"

(श) শকুন্তলা। যে অবধি তপোবনরক্ষিতা সেই রাজর্ষি, আমার দৃষ্টিপথে পড়িয়াছেন—( এই অর্দ্ধোক্তির পর লজ্জা অভিনয় করিলেন। )

(ষ) সখীদ্বয়। প্রিয়সখী বল বল।

(স) শকুন্তলা। তদবধি তদ্গত অভিলাষবশতঃ আমি এইরূপ অবস্থায় উপনীত হইয়াছি।

(१) क्वचिदयं पाठो नास्ति । (२) क्वचिदेष पाठोऽपि पृथक् न वर्त्तते ।

(३) क्वचित् एष पाठो नास्ति ।

राजा । सहर्षम् । श्रुतं यच्छ्रोतव्यम् (१) । (च)

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः ।

दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य (२) ॥१३॥

(छ) उभे इति । दिष्ट्या भाग्येन । उज्झित्वा परित्यज्य । महानद्या गङ्गया । अत्र दृष्टान्तोऽलङ्कारः ।

(च) राजेति । यत् श्रोतव्यमासीदित्यर्थः । यच्छब्दस्य उत्तरवाक्यगतत्वात् न तच्छब्दापेक्षा ।

स्मर इति । तपात्यये ग्रीष्मकालावसाने, जीवलोकस्य प्राणिजगतः, अपो बिभर्त्तीति अभ्रं मेघस्तेन तद्व्यापनेनेत्यर्थः श्यामः श्यामवर्णः, दिवस इव, स्मरः काम एव मे तापहेतुः सन्तापजनक आसीत्, इदानीं स स्मर एव पुनर्निर्वापयिता सन्तापनिवर्त्तयिता जातः । तथा च यथा ग्रीष्मकाले दिवसो जनानां सन्तापं जनयति, परन्तु ग्रीष्मकालावसाने वर्षोन्मुखमेघावृतगगनः स एव दिवसः शीतवायुवहनात् तं सन्तापं पुनर्निवर्त्तयति ; तथा कामोऽपि शकुन्तलोद्देशेन मम सन्तापं जनितवान्, पुनर्मदुद्देशेन शकुन्तलामपि सन्ताप्य ममाशापूरणेन तं मे सन्तापं निवर्त्तितवानिति सरलार्थो भावार्थश्च ।

अत्र तापजनकत्व-तापोपशमकत्वयोर्विरूपयोः सङ्घटनया विषमालङ्कारः श्रौतोपमया संसृज्यते । अभ्रश्यामपदेन सजलमेघसूचनेन शीतलवायुवहनसूचनात् न अपुष्टार्थत्वदोषः ।

"अभ्रं मेघो वारिवाहः" इत्याद्यमरः । आर्य्या जातिः ॥१३॥

(छ) সখীদ্বয় । ভাগ্যবশতঃ উপযুক্ত বরেই তোমার অভিলাষ জন্মিয়াছে । অথবা সমুদ্র পরিত্যাগ করিয়া মহানদী আর কোথায় প্রবেশ করিবে ।

(চ) রাজা । ( আনন্দের সহিত ) যাহা শুনিবার, তাহা শুনিলাম ।

দিন যেমন গ্রীষ্মকালে লোকের সন্তাপ জন্মায়, আবার গ্রীষ্মকাল অতীত হইলে সেই দিনই মেঘমলিন হইয়া সেই সন্তাপের নিবৃত্তি করে,

(१) क्वचित् यच्छब्दो न दृश्यते । (२) दिवस इवार्द्रश्यामः ।

শকু। তা জই বো অণুমদং, তদো তধা পউত্তিদব্বং, জধা তস্স রাএসিণো অণুকম্পণীআ হোমি ত্তি। অণ্ণধা সুমরেধ মং (১)। (ক)

রাজা। অহো! বিমর্শচ্ছেদি বচনম্। এতদেব কামফলম্, যতফলমন্যত্। এতাবদবস্থাপি মাং সুখয়তি (২)। (খ)

(ক) তদ্ যদি বামনুমতম্, ততস্তথা প্রবর্ত্তিতব্যম্, যথা তস্য রাজর্ষেরনুকম্পনীয়া ভবামীতি। অন্যথা স্মরতং মাম্।

(ক) শকু ইতি। তৎ তস্মাৎ। বা যুবয়োঃ অনুমতং সম্মতং দুষ্মন্তং প্রতি মমেদমভিলাষকরণমিত্যর্থঃ ততস্তদা, প্রবর্ত্তিতব্যং যতিতব্যম্। অনুকম্পনীয়া সম্মিলনেন দয়াপাত্রীকরণীয়া। অন্যথা যুবয়োর্যত্নাভাবেন তস্যানুকম্পনীয়ত্বাভাবে, মাং স্মরতং মরণাবশ্যম্ভাবাৎ স্মৃতিবিষয়মেব কুরুতমিত্যর্থঃ।

(খ) রাজেতি। বিমর্শচ্ছেদি সকলসংশয়নিবর্ত্তকম্। তথা চ কিমিয়ং শকুন্তলা কণ্বাদিগুরুজনানপেক্ষ্যৈব আত্মানং দাতুং শক্ষ্যতি; কিংবা মহ্যমাত্মানং দাতুমিচ্ছন্তীমপি পরাধীনতয়া কণ্বাদিগুরুজনঃ অন্যস্মৈ দাস্যতি ইত্যাদিঃ সর্ব্ব এব সংশয়ঃ, অনেন বচনেন নিরস্তঃ, আত্মদানে গুরুজনানপেক্ষত্বসূচনাদিত্যাশয়ঃ। এতদেব পরস্পরং প্রতি পরস্পরাসক্তিরূপমেব, কামফলং কামেন জনিতম্, অন্যৎ ক্রিয়াভূতং পরিণয়াদিকম্, যতফলম্ উভয়োর্বরকন্যাপক্ষয়োর্যত্নজন্যম্, তচ্চ কামেন ন জন্যতে

সেইরূপ কামদেবই আমার সন্তাপ জন্মাইয়াছিলেন, আবার তিনিই সেই সন্তাপের নিবৃত্তি করিলেন ॥১৩॥

(ক) শকুন্তলা। তা, যদি তোমাদের সম্মত হয়, তবে সেইভাবে প্রবৃত্ত হইবে, যাহাতে আমি সেই রাজর্ষির দয়ার পাত্র হইতে পারি। না হইলে আমাকে স্মরণ করিবে।

(১) ··অণুমদং তহ বট্টহ···অণ্ণহা অবস্সং চিন্তহ মে তিলোদঅং।

(২) সংশয়চ্ছেদি বচনম্ ইতিমাত্রঃ পাঠঃ ক্বচিৎ।

প্রিয়ং। জনান্তিকম্। অণসূএ! দূরগদো সে মণোরহো, অক্খমা দাণিং কালহরণস্স (১)। (গ)

অন। পিঅংবদে! কো ণু উবাও ভবে, জেণ অবিলম্বিদং ণিহুদঞ্চ সহীএ মণোরহং সম্পাদেম্হ (২)। (ঘ)

(গ) অনসূয়ে! দূরগতঃ অস্যা মনোরথঃ, অক্ষমা ইদং কালহরণস্য।

অযোগ্যত্বাদিতি ভাবঃ। এতাবতী এতৎপর্য্যন্তা মদাশক্তিপ্রদর্শনমাত্রপর্য্যন্তা অবস্থা যস্যাঃ সা তাদৃশ্যপি মাং সুখয়তি; অধুনা শকুমারজননেঽপি অনয়ৈবাশঙ্কয়া ভাবিশকুন্তলাসঙ্গমস্যাবশ্যম্ভাবাদিত্যভিপ্রায়ঃ।

অত্র মার্গো নাম গর্ভসন্ধ্যঙ্গম্—"তত্ত্বার্থকথনং মার্গঃ" ইতি দর্পণলক্ষণাৎ।

(গ) প্রিয়মিতি। অস্যাঃ শকুন্তলায়াঃ, মনোরথঃ দুষ্মন্তেন সহ সঙ্গমাভিলাষঃ, দূরগতঃ নিতান্তাধিকীভূত ইত্যর্থঃ; অতএব কালহরণস্য বিলম্বস্য করণে অক্ষমা।

(খ) রাজা। ভাল! সন্দেহনাশক বাক্য বটে। ইহাই কামের ফল; অন্য যাহা, তাহা চেষ্টার ফল। এইরূপ অবস্থা হইয়াও আমাকে সুখী করিতেছে।

(গ) প্রিয়ংবদা। (অনসূয়ার প্রতি চুপি চুপি) অনসূয়া! শকুন্তলার অভিলাষ দূরে উঠিয়াছে; সুতরাং এ, কালক্ষেপ করিতে অসমর্থ হইতেছে।

(১) · দূরগঅমণম্হা অক্খমা···। জম্বিং বদ্ধভাবা এসা, সো ললামভূদো পোরবাণং। তা জুত্তং সে অহিলাসো অহিণন্দিদুং।

(২)···রাজ জহ ভণাসি। প্রিয়ংবদা। প্রকাশম্। সহি! দিট্ঠিআ অণুরূবো দে অহিণিবেসো। সাঅরং বজ্জিঅ কহিং বা মহাণই ওদরই। কো দাণিং সহআরং অন্তরেণ অদিমুত্তলদং পল্লবিদং সহেই। রাজা। কিমত্র চিত্রং যদি বিশাখে শশাঙ্কলেখামনুবর্ত্তেতে। অনসূয়া। কো উণ উবাও ভবে···।

प्रिय'। णिहुदं त्ति चिन्तणीअं, सिग्घं त्ति ण दुक्करं। (ङ)

अन। कधं विअ?। (च)

प्रिय'। णं सो वि राएसी इमस्सिं जणे सिणिद्धदिट्ठिआ सूइदाहिलासो इमेसुं दिअसेसुं पजाअरकिसो विअ लक्खीअदि। (छ)

(घ) प्रियंवदे! को नु उपायो भवेत्, येन अविलम्बितं निभृतञ्च सख्या मनोरथं सम्पादयावः।

(ङ) निभृतमिति चिन्तनीयम्, शीघ्रमिति न दुष्करम्।

(च) कथमिव?।

(छ) ननु सोऽपि राजर्षिः अस्मिन् जने स्निग्धदृष्ट्या सूचिताभिलाषः एषु दिवसेषु प्रजागरकृश इव लक्ष्यते।

(घ) अनेति। निभृतं गुप्तञ्च यथा स्यात्तथा। मनोरथं मनोरथविषयभूतं दुष्मन्तसङ्गमम्।

(ङ) प्रियमिति। निभृतं गुप्तं गुप्तभावेन सम्मिलनजननम्, चिन्तनीयं दुष्करतया भावनीयम्, कण्वशिष्यादितस्तत: सञ्चरणादिति भाव:। शीघ्रं शीघ्रं सम्मिलनघटनम्, न दुष्करम्, दुष्मन्तस्यापि एनां प्रति गुरुतरासक्त्यवगमादित्यभिप्राय:।

(छ) प्रियमिति। अस्मिन् जने शकुन्तलायाम्, स्निग्धदृष्ट्या सानुरागदृष्टिपातेन,

(ঘ) অনসূয়া। প্রিয়ংবদা! কি উপায় হইবে, যাহাতে অবিলম্বে অথ চ গোপনে সখার অভিলাষ সম্পাদন করিতে পারি।

(ঙ) প্রিয়ংবদা। গোপনে ইহাই চিন্তার বিষয়; কিন্তু 'শীঘ্র' ইহা দুষ্কর নহে।

(চ) অনসূয়া। কি রকম?।

রাজা। আত্মানমালোক্য। সত্যমিত্থম্ভূত এবাস্মি। তথাহি—(জ)

অভিশিরতরৈরন্তস্তাপৈর্বিবর্ণমলীমসং
নিশি নিশি ভুজন্যস্তাপাঙ্গপ্রবর্ত্তিভিরশ্রুভিঃ।
অনতিলুলিতজ্যাঘাতাঙ্কান্মুহুর্মণিবন্ধনাৎ
কনকবলয়ং স্রস্তং স্রস্তং ময়া প্রতিসার্য্যতে (১) ॥১৪॥

সূচিতঃ অভিলাষো যস্য সঃ। প্রজাগরেণ রাত্রিজাগরণেন কৃশঃ। তথা চ তস্যাপ্যাসক্তিসত্ত্বাৎ শীঘ্রমিতি ন দুষ্করমিতি ভাবঃ।

(জ) রাজেতি। আত্মানং স্বদেহম্। সত্যমিতি প্রিয়ংবদোক্তস্বীকারায়। ইত্থম্ভূতঃ প্রজাগরকৃশ এব।

অভিশিরেতি। অন্তস্তাপৈঃ অন্তর্গতমদনসন্তাপহেতুভিঃ। হেতুত্বঞ্চৈষামশ্রুপ্রবর্ত্তনং প্রতীতি বোধ্যম্। অভিশিরতরৈরত্যুষ্ণৈঃ, নিশি নিশি রাত্রৌ রাত্রৌ, ভুজে হস্তে ন্যস্তাৎ স্থাপিতাৎ অপাঙ্গাৎ নয়নপ্রান্তাৎ প্রবর্ত্তন্তে নির্গচ্ছন্তীতি তৈঃ, অশ্রুভির্নয়নজলৈঃ, বিবর্ণং কশ্মিংশ্চিদংশে বিকৃতবর্ণং কশ্মিংশ্চিচ্চ মলীমসং মলিনীভূতম্। উভয়োরপি বিশেষণয়োঃ পরস্য বিশেষ্যত্ববিবক্ষয়া "ভাষ্যং প্রসন্নগম্ভীরম্" ইত্যাদিবৎ কর্ম্মধারয়ঃ। কনকবলয়ং স্বর্ণকটকম্, অনতিলুলিতঃ বলয়াবরণেন অনতিব্যক্তঃ জ্যাঘাতাঙ্কঃ ধনুর্গুণঘর্ষণচিহ্নং যস্মিন্ তস্মাৎ তথোক্তাৎ, মণির্বধ্যতেঽস্মিন্নিতি মণিবন্ধনং হস্তস্য প্রকোষ্ঠদেশস্তস্মাৎ স্রস্তং স্রস্তং স্খলিতং স্খলিতম্, ময়া মুহুর্বারং বারং প্রতিসার্য্যতে

(ছ) প্রিয়ংবদা। ওহে! সে রাজর্ষিও, এই ব্যক্তির প্রতি স্নিগ্ধ দৃষ্টিদ্বারা, নিজের অভিলাষ ব্যক্ত করিয়াছেন এবং এই কয় দিনেই তাঁহাকে জাগরণবশতঃ কৃশ বলিয়া লক্ষ্য করিয়াছি।

(জ) রাজা। (আপনার দিকে চাহিয়া) সত্য; আমি এইরূপই ত হইয়াছি। যেহেতু—

(১)···অন্তস্তাপাদ্বিবর্ণমলীকৃতং।·· ভুজন্যস্তাপাঙ্গপ্রসারিভিঃ···। অনতিলুলিতজ্যাঘাতাঙ্কং। পুনঃ প্রতিসার্য্যতে।

प्रियं । विचिन्त्य । हला ! मञ्जणलेहणं दाणिं से करीअदु, अहं तं सुमणोगोविदं कदुअ देवदासेवावदेसेण तस्स रण्णो हत्थं पावइस्सं । (भ)

(भ) हला ! मदनलेखनमिदानीमस्याः क्रियताम्, अहं तत् सुमनोगोपितं कृत्वा देवतासेवापदेशेन तस्य राज्ञो हस्तं प्रापयिष्यामि ।

स्थानं नीयते । पूर्वं शरीरस्य आपेक्षिकस्थूलतया दृढलग्नस्य कनकवलयस्येदानीं स्रंसनात् कृश एवास्मीति भावः ;

अत्र कृशाङ्गत्वात् प्रस्तुतेन कार्य्येण कनकवलयस्रंसनेन तत्कारणीभूतं कार्श्यं प्रत्याय्यते इति पर्य्यायोक्तमलङ्कारः । अश्रुभिरुष्णतरैरित्यनेन तापस्याधिक्यं व्यज्यते । दिवसे रोदने परैः सन्दर्शनेन गाम्भीर्य्यहान्या धीरोदात्तत्वव्याघात इति निशि निशीत्युक्तम् । भुजन्यस्तापाङ्गेत्यनेन चिन्ता सूच्यते लोकैस्तथैव चिन्ताकरणात् । ज्याघाताङ्कस्य उज्ज्वलेनैव अतिस्पष्टत्वं भवति, अनतिस्पष्टत्वे च अनत्युच्चत्वम् ; ततश्च कनकवलयस्रंसने ज्याघाताङ्केन न प्रतिबन्ध इति दर्शितम् । अतो नापुष्टार्थतादोषः ।

अत्र कनकवलयमिति दर्शनात् पुरा अबालकानामपि पुरुषाणामलङ्कारधारणरीतिरासीदिति प्रतीयते ।

हरिणी वृत्तम्—"न-स-म-र-सलागः षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात् ॥१४

(भ) प्रियमिति । विचिन्त्य उपायोद्भावने भावनां कृत्वा । हला इति अनसूया-

আমি প্রত্যেক রাত্রিতে হাতের উপরে নয়নের প্রান্তদেশ রাখিয়া বসিয়া থাকি ; তখন ভিতরের সন্তাপের উষ্ণ অশ্রুজল পতিত হইয়া হাতের সোণার বালাগাছীকে বিবর্ণ এবং মলিন করিয়া থাকে ; এদিকে ধনুর গুণ আকর্ষণ করায় মণিবন্ধদেশে চিহ্ন হইয়াছে, বলয় থাকায় সে চিহ্ন ব্যক্ত হয় না ; এহেন মণিবন্ধদেশ হইতে সেই সোণার বালা বার বার পড়িয়া যাইতে থাকে, আমি আবার তাহা বার বার সরাইয়া দিয়া থাকি ॥১৪॥

অন। সহি! রোঅদি মে সুউমারো এসো পওও। কিংবা সউন্তলা ভণাদি?। (ঞ)

শকু। সহীণিওও বি বিকপ্পীঅদি? (১)। (ট)

(ঞ) সখি। রোচতে মে এষ প্রয়োগঃ। কিংবা শকুন্তলা ভণতি?। সম্বোধনম্। অস্যাঃ শকুন্তলায়াঃ সম্বন্ধে, মদনলেখনম্ আত্মনঃ কামাবির্ভাবজ্ঞাপিকা লিপিঃ। সুমনোভিঃ পুষ্পৈঃ গোপিতং কৃত্বা পুষ্পরাশেরভ্যন্তরে স্থাপয়িত্বেত্যর্থঃ, দেবতা-সেবাপদেশেন দেবতাপূজাচ্ছলেন আভিঃ সুমনোভির্দেবতা পূজ্যতামিতি ছলেনেত্যর্থঃ।

অত্র অভূতাহরণং নাম গর্ভসন্ধেরঙ্গম্। তথা চ দর্পণে—

"তত্র ব্যাজাশ্রয়ং বাক্যমভূতাহরণং মতম্।"

"স্ত্রিয়ঃ সুমনসঃ পুষ্পম্" ইত্যমরঃ।

(ঞ) অনেতি। সুকুমারঃ কোমলঃ অপরিশ্রমসাধ্য ইত্যর্থঃ। শকুন্তলায়া অভিসরণে তু পরিশ্রমাৎ কাঠিন্যং স্যাদিতি ভাবঃ। প্রয়োগঃ অনুষ্ঠানম্। কিংবেত্যাদিকা তু উক্তার্থে শকুন্তলায়া মতমস্তি ন বেতি জিজ্ঞাসার্থা।

(ট) শকু ইতি। সখ্যোর্নিরতিশয়হিতৈষিণ্যোর্যুবয়োঃ নিয়োগ আদেশোঽপি, বিকল্প্যতে কর্ত্তব্যঃ অকর্ত্তব্যো বা ইতি বিবিচ্যতে? কাকুবশাৎ কথমপি নেত্যর্থঃ। উক্তোপায়ে সর্ব্বথা মম সম্মতিরস্তীতি ভাবঃ।

অত্র মনোরথো নাম নাট্যলক্ষণম্। যথা দর্পণে—

"মনোরথস্ত্বভিপ্রায়স্যোক্তির্ভঙ্গ্যন্তরেণ যৎ।"

(ঝ) প্রিয়ংবদা। (চিন্তা করিয়া) ওলো! উহার জন্য এখন একখানা কামলিপি রচনা কর, আমি তাহা পুষ্পের ভিতরে গুপ্ত করিয়া, দেবতাপূজার ছলে সেই রাজার হাতে পৌঁছাইয়া দিব।

(ঞ) অনসূয়া। সখি! কোমল এই অনুষ্ঠানটী আমারও অভিমত হয়। অথবা শকুন্তলা কি বলে?।

(১) কো ণিওও বিকপ্পীঅই।

प्रियं । तेण हि अत्तणो उवण्णासाणुरूअं चिन्तेहि ललिदपदावलिबन्धं गीदिअं (१) । (ठ)

शकु । चिन्तेमि ; किन्तु अवहीरणाभीरुअं वेवदि मे हिअअं (२) । (ड)

(ट) सखीनियोगोऽपि विकल्प्यते ।

(ठ) तेन हि आत्मन उपन्यासानुरूपां चिन्तय ललितपदावलिबन्धां गीतिकाम् ।

(ड) चिन्तयामि ; किन्तु अवधीरणाभीरुकं वेपते मे हृदयम् ।

(ठ) प्रियमिति । तेन हि आत्मनोऽपि सम्मतत्वेनैव हेतुना । उपन्यासानुरूपां प्रथमकथनयोग्याम्, ललितया कोमलया पदावल्या सुश्लिष्टपदश्रेण्या बन्धो रचना यस्यास्ताम् । तथात्वे श्रुतिमधुरतया राज्ञः प्रीत्यतिशयो भवेदिति भावः । गीतिकां गीतम् । तदेव राज्ञो हस्तं प्रापयिष्यामीत्याशयः ।

"उपन्यासस्तु वाङ्मुखम्" इत्यमरः ।

(ड) शकु इति । चिन्तयामीति प्रियंवदोक्तिस्वीकारः । अवधीरणाया मय्येव राजकृतावज्ञातः भीरुकं भयशीलम् । वेपते कम्पते । तथा च राजा दुष्मन्तो यदि वनवासिनीमकिञ्चना मामवज्ञया प्रत्याचष्टे, तदा तादृशलेखने केवलकुलटाचरितप्रकाशः स्यादित्यभिप्रायः ।

अत्र अवधीरणाजनितभयादुद्वेगो नाम गर्भसन्ध्यङ्गम् । यथा दर्पणे—

"नृपादिजनिता भीतिरुद्वेगः परिकीर्त्तितः ।"

(ট) শকুন্তলা। সখীর আদেশেও কি মতামত করিব ?।

(ঠ) প্রিয়ংবদা। তাহা হইলে নিজের অবস্থার অনুরূপ এবং সুললিতপদাবলীরচিত একটি গীত চিন্তা কর।

(१)···उवण्णासपुव्वं चिन्तेहि दाव किं पि ललिअपदबन्धणं ।

(२) हला···अहं ।···पुण वेवइ ।

राजा । विहस्य । अयं स ते तिष्ठति सङ्गमोत्सुको
विशङ्कसे भीरु ! यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा श्रियं
श्रिया दुरापः कथमीप्सितो भवेत् ॥१५॥

अपि च, अयं स यस्मात् प्रणयावधीरणाम्
अशङ्कनीयां करभोरु ! शङ्कसे ।

अयमिति । हे भीरु ! अवज्ञाभयशीलि ! यतो यस्मात् जनात्, त्वम् अवधीरणाम् अवज्ञाम्, विशङ्कसे सन्दिह्यसि, अयं स जनः, ते तव, सङ्गमाय सम्मेलनाय उत्सुक उत्कण्ठितः सन्, तिष्ठति । तथा च प्रार्थयिता श्रिया एव प्रार्थी जनः, श्रियं सम्पदम्, लभेत प्राप्नुयात्, वा किंवा, न लभेत इत्यर्थः, किन्तु श्रिया तया सम्पदा, ईप्सित आप्तुमिष्टः अभिलषितो जनः, कथं दुरापो दुर्लभः भवेत्, कथमपि नेत्यर्थः । तथा च मयैव त्वं दुर्लभा, न तु त्वया अहं दुर्लभः, त्वत्सिमयैवोपस्थितत्वादित्याशयः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः अर्थापत्तिश्च, अनयोर्गुण-प्रधानभावेनाङ्गाङ्गिभावात् सङ्करः । तथा श्रियं श्रियेति श्रीशब्दस्य वारद्वयोपादानात् कथितपदतादोषः "रतिलीलाश्रमं भिन्ते सलीलमनिलो वहन्" इति साहित्यदर्पणोदा-हरणवत् ; स च 'तया दुरापः' इति पाठेन समाधेयः ।

वंशस्थविलं वृत्तम्—"वदन्ति वंशस्थविलं जतौ जरौ" इति लक्षणात् ॥१५॥

---

(ড) শকুন্তলা। চিন্তা ত করিব ; কিন্তু আমার মন অবজ্ঞার ভয়ে কাঁপিতেছে।

রাজা। (একটু হাসিয়া) হে ভীরু! তুমি যে লোক হইতে অবজ্ঞার আশঙ্কা করিতেছ, এই সেই লোক তোমার সহিত সম্মিলিত হইবার জন্য উৎকণ্ঠিত হইয়া রহিয়াছে। প্রার্থী ব্যক্তি শ্রী পাইতেও পারে, নাও পাইতে পারে ; কিন্তু শ্রী যাহাকে লাভ করিতে ইচ্ছা করেন, সে ব্যক্তি শ্রীর পক্ষে দুর্লভ হইবে কেন ॥১৫॥

उपस्थितस्त्वां प्रणयोत्सुको जनो
न रत्नमन्विष्यति मृग्यते हि तत् (१) ॥१६॥

उक्तमेवार्थं भङ्ग्यन्तरेणाह अयमिति। करभो हस्तस्य मणिबन्धदेशात् कनिष्ठाङ्गुली-पर्य्यन्ततिर्य्यक्प्रदेशाविव ऊरू यस्यास्तत्सम्बोधनम्। हे करभोरु! यस्मात् जनात्, अशङ्कनीयाम् असन्देहनीयाम्, प्रणयावधीरणां प्रार्थनावज्ञाम् अवज्ञया प्रार्थना-निरासमित्यर्थः, शङ्कसे सन्दिह्यसि; सः अयं जनः अहमित्यर्थः, प्रणयोत्सुकः तवैव प्रार्थनोद्युक्तः सन्, त्वाम् उपस्थित आगतः। अतएव अस्मादवज्ञाशङ्का कथमपि न करणीयेति भावः। हि तथाहि, रत्नं मणिः कर्त्तृ, न अन्विष्यति लोकान् न मार्गयति; किन्तु तत् रत्नमेव, मृग्यते लोकैर्मार्ग्यते।

अत्रापि पूर्ववदेव अर्थान्तरन्यासोऽलङ्कारः। तथा पूर्ववदेव प्रणयशब्दस्य द्विःपाठात् कथितपदतादोषः, किञ्च चतुर्थपादे कर्त्तृपदानभिधानात् न्यूनपदतादोषश्च, अन्विष्यति इत्यनेन प्रक्रम्य मृग्यत इत्यभिधानात् भग्नप्रक्रमतादोषश्च। तेषां समाधानाय परार्द्धमेवं पठनीयम्—"उपस्थितस्तेऽर्थयिता स्वयं जनान् न याचते रत्नमिदं हि याच्यते॥" तथा च रत्नं कर्त्तृ जनान् न याचते, इदं रत्नमेव याच्यते तैर्जनैरिति विभक्तिविपरिणामेन याच्यत इत्यस्य कर्त्तृपदप्राप्तिरिति ध्येयम्।

"प्रणयः प्रेम्णि याच्ञायाम्" इति हेमचन्द्रः। "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः।

चतुर्थचरणमविकलमेव रघुवंशतृतीयसर्गेऽपि दृश्यते। वंशस्थविलं वृत्तम्॥१६॥

---

আরও, হে করভোরু! তুমি যে ব্যক্তি হইতে, আশঙ্কার অযোগ্য প্রার্থনাভঙ্গের আশঙ্কা করিতেছ, এই সেই ব্যক্তি তোমারই প্রার্থনার জন্য উৎকণ্ঠিত হইয়া উপস্থিত হইয়াছে। কারণ, রত্ন কাহাকেও অন্বেষণ করে না, রত্নকেই সকলে অন্বেষণ করে ॥১৬॥

---

(१) क्वचिदेष श्लोको न दृश्यते।

अनेन लीलाभरणेन ते प्रिये !
विहाय कान्तं भुजमत्र तिष्ठता।
जनः समाश्वासित एष दुःखभाक्
अचेतनेनापि सता, न तु त्वया ॥३१॥

शकु। अदो वरं ण समत्थम्हि विलम्बिदुं। भोदु, एदेण ज्जेव अवदेसेण अत्ताणं दंसइस्सं। इत्युपसर्पति। (ट)

(ट) अतः परं न समर्थास्मि विलम्बितुम्। भवतु, एतेनैव अपदेशेन आत्मानं दर्शयिष्यामि।

अनेनेति। हे प्रिये! शकुन्तले! कान्तं मनोहरम्, भुजं हस्तम्, विहाय परित्यज्य, अत्र स्थाने, तिष्ठता विद्यमानेन, अनेन ते तव लीलाभरणेन विलासालङ्कारेण, अचेतनेन चैतन्यरहितेन सतापि, दुःखभाक् वियोगकष्टशाली, एष मत्स्वरूपो जनः समाश्वासितः आकाङ्क्षितस्पर्शसुखसम्पादनेन सान्त्वितः, तु किन्तु त्वया सचेतनया सत्यापि इत्याशयः, न समाश्वासित इत्यन्वयः। इदन्तु महादुःखकारणं महदाश्चर्यञ्चेत्यभिप्रायः।

अत्र चेतनात्मकहेत्वभावेऽपि आश्वासनरूपकार्य्योत्पत्तेर्विभावना, सचेतनशकुन्तलारूपहेतुसत्त्वेऽपि आश्वासनात्मककार्य्यानुत्पत्तेर्विशेषोक्तिः तथा प्रस्तुतयोरेव मृणालवलयशकुन्तलयोराश्वासित इत्येकया क्रियया कर्त्तृतयाभिसम्बन्धात्तुल्ययोगिता च इत्येतेषां गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः।

वंशस्थविलं वृत्तम् ॥३१॥

(ट) शकु इति। अतः परम् ईदृशविलापश्रवणानन्तरम् एतेनैव मृणालवलयप्रार्थनात्मकेनैव, अपदेशेन छलेन।

হে প্রিয়তমে! তোমার সুন্দর হাতখানি ত্যাগ করিয়া, এইখানে থাকিয়া, তোমার এই বিলাসালঙ্কার অচেতন হইয়াও, এই দুঃখী ব্যক্তিকে আশ্বস্ত করিল; কিন্তু তুমি করিলে না ॥৩১॥

राजा । (हर्षम् सहर्षम्) अये ! जीवितेश्वरी मे प्राप्ता । परिदेवनानन्तरं प्रसादेनोपकर्त्तव्योऽस्मि खलु दैवस्य । (ठ)

विपासाक्षामकण्ठेन याचितञ्चाम्बु पक्षिणा ।
नवमेघोज्झिता चास्य धारा निपतिता मुखे ॥३२॥

(ठ) राजेति । अये इति हर्षे । मे मम जीवितेश्वरी जीवननियन्त्री, उपस्थितौ आश्वासात् जीवनस्थितेः अनुपस्थितौ च नैराश्यात् जीवनास्थितेरित्याशयः । प्राप्ता उपस्थिता । अतएव परिदेवनानन्तरं पूर्वकृतविलापात् परम्, दैवस्य विधेः प्रसादेन अनुग्रहेण उपकर्त्तव्योऽस्मि उपकारयोग्यः कृतोऽस्मि, शकुन्तलायाः पुनरपि उपस्थापनादिति भावः ।

अत्र प्रहर्षो नाम नाट्यालङ्कारः—"प्रहर्षः प्रमदाधिक्यम्" इति दर्पणलक्षणात् । दैवस्येति "वा कर्त्तरि कृत्ये" इति कर्त्तरि षष्ठी ।

पिपासेति । पिपासया जलतृष्णया क्षामः क्षीणः कण्ठः स्वरो यस्य तेन, पक्षिणा चातकेन, अम्बु जलञ्च याचितं नवमेघेन उज्झिता उत्सृष्टा धारा वृष्टिजलधारा च, अस्य पक्षिणश्चातकस्य मुखे निपतिता । तथा च यथा तृष्णातुरचातकस्य जलप्रार्थनानन्तरमेव तत्प्राप्तौ महानुल्लासो जायते, ममापि तथैव शकुन्तलादर्शनप्रार्थनानन्तरमेव तद्दर्शनप्राप्तेः महानुल्लासो जात इत्याशयः ।

अतएवात्र समादप्रस्तुतात् प्रस्तुतस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः, चकारद्वयेन याचनपतनक्रिययोर्यौगपद्यसूचनात् क्रियासमुच्चयश्च ; अनयोर्गुणप्रधानभावेनाङ्गाङ्गिभावात्

(ট) শকুন্তলা। ইহার পর আর বিলম্ব করিতে পারি না। হউক, এই ছলেই আপনাকে দেখাই। (এই বলিয়া নিকটে গেল।)

(ঠ) রাজা। (দেখিয়া আনন্দের সহিত) ওহে! আমার জীবিতেশ্বরী উপস্থিত হইয়াছেন। বিলাপের পর অনুগ্রহ করিয়া বিধাতা আমার উপকার করিয়াছেন।

শকু। (রাজ্ঞঃ সম্মুখে স্থিত্বা।) অজ্জ! অদ্ধপধে সুমরিঅ এদস্স হত্থব্ভংসিণো মিণালবলঅস্স কদে পড়িণিবুত্তম্হি, কধিদং মে হিঅএণ, তএ গহিদং ত্তি। তা ণিক্খিব এদং, মা মং অত্তাণঞ্চ মুণিঅণেসু পআসইস্সদি। (ঙ)

(ঙ) আর্য্য! অর্দ্ধপথে স্মৃত্বা এতস্য হস্তভ্রংশিনো মৃণালবলয়স্য কৃতে প্রতিনিবৃত্তাস্মি; কথিতং মে হৃদয়েন, ত্বয়া গৃহীতমিতি। তন্নিক্ষিপ এতৎ, মা মামাত্মানঞ্চ মুনিজনেষু প্রকাশয়িষ্যতি।

সঙ্করঃ। তথা চাতকেনেতি পক্ষিবিশেষে বক্তব্যে পক্ষিণেতি তৎসামান্যাভিধানাৎ বিশেষে অবিশেষাখ্যদোষঃ, স চ 'চাতকেনাম্বু চার্থিতম্' ইতি পাঠেন সমাধেয়ঃ।

"স্বরেঽপি কণ্ঠ আখ্যাতঃ" ইতি হারাবলী।

চামিতি "চঁ মুষিপচাং মকবাঃ" ইতি চঁ ধাতোঃ প্রত্যয়তকারস্য মকারঃ ॥৩২॥

(ঙ) শকু ইতি। কৃতে নিমিত্তে। কথিতং জ্ঞাপিতম্। তৎ তস্মাৎ, এতৎ মৃণালবলয়ম্, নিক্ষিপ সমর্পয়। তথাত্বে কিং ভবেদিত্যাহ মেতি। মাং শকুন্তলাম্, আত্মানং স্বং দুষ্মন্তঞ্চ, মুনিজনেষু মা ন প্রকাশয়িষ্যতি, ইদং মৃণালবলয়ং কর্ত্তৃ ইতি শেষঃ। অন্যথা অস্মিন্ মৃণালবলয়ে তথৈব হস্তগতে মুনিভিশ্চ দৃষ্টে, 'মদীয়ং বস্তু কথং তে হস্তগতম্' ইতি সন্দেহেন মুনিজনেষু আবয়োরহঃসম্পর্কঃ প্রকাশীভবিষ্যতীতি ভাবঃ।

চাতক, পিপাসায় ক্ষীণকণ্ঠ হইয়া জলও প্রার্থনা করিল; নবমেঘ-প্রদত্ত জলধারাও ইহার মুখে নিপতিত হইল ॥৩২॥

(ঙ) শকুন্তলা। (রাজার সম্মুখে থাকিয়া) আর্য্য! অর্দ্ধপথে স্মরণ করিয়া, হস্তচ্যুত এই মৃণালবলয়ের জন্যই আবার ফিরিয়া আসিয়াছি; আমার মন বলিল যে, আপনিই গ্রহণ করিয়াছেন। অতএব উহা নিক্ষেপ করুন; আমাকে এবং নিজেকে মুনিগণের নিকট প্রকাশ করিবেন না।

राजा। एकेनाभिसन्धिना प्रत्यर्पयामि। (ढ)

शकु। केण उण?। (ण)

राजा। यदीदमहमेव यथास्थानं निवेशयामि। (त)

शकु। आ, का गदी। भोदु एदं दाव। इत्युपसर्पति। (थ)

राजा। इतः शिलापट्टैकदेशं संश्रयावः। इत्युभौ परिक्रम्योपविष्टौ। (द)

(ण) केन पुनः?।

(थ) आः, का गतिः। भवतु एतत् तावत्।

(ढ) राजेति। अभिसन्धिना मया अभिसन्धीयमानेन पणेन।

(ण) शकु इति। केन अभिसन्धिना।

(त) राजेति। अहमेव यदि इदं मृणालवलयं यथास्थानं तव हस्ते इत्यर्थः, निवेशयामि स्थापयामि स्थापयितुमनुमतिं लभे इति तात्पर्य्यम्। अयमेव ममाभिसन्धिः; अन्यथा च न प्रत्यर्पयामीत्याशयः।

(थ) शकु इति। आ इति क्लेश पीडासूचनम्, का गतिः, तव पणपूरणाङ्गीकार-मन्तरेण क उपायः। अतएवाह भवत्विति। एतत् त्वयैव यथास्थानं निवेशनं भवतु इति पणपूरणाङ्गीकारः। उपसर्पति राज्ञः समीपं गच्छति।

(द) राजेति। इतः अस्मिन् पार्श्वे, शिलापट्टस्य प्रस्तरफलकस्य एकदेशम्, संश्रयाव उपवेशनाय अवलम्बावहे। अन्यथा दण्डायमानस्य निवेशने महत्यसुविधा भवेदिति भावः।

(ঢ) রাজা। একটী পণদ্বারা প্রত্যর্পণ করিব।

(ণ) শকুন্তলা। কি পণদ্বারা?।

(ত) রাজা। যদি আমিই এটীকে যথাস্থানে পরাইয়া দিই।

(থ) শকুন্তলা। আঃ, উপায় কি। ইহাই হউক। (এই বলিয়া নিকটে গেল।)

राजा। शकुन्तलाया हस्तमादाय। अहो स्पर्शः!। (ध)

हरकोपाग्निदग्धस्य दैवेनामृतवर्षिणा।

प्ररोहः सम्भृतो भूयः किंस्वित् कामतरोरयम्? ॥३३॥

शकु। स्पर्शं रूपयित्वा। तुवरदु तुवरदु अज्जउत्तो। (न)

(न) त्वरतां त्वरताम् आर्य्यपुत्रः।

(ध) राजेति। अहो आश्चर्य्यः, परमानन्दजनकत्वादित्याशयः।

हरेति। अयं तव हस्तः, हरस्य महादेवस्य कोपाग्निना पार्वतीसन्निधाने सम्मोहन-कालीन क्रोधजनितवह्निना दग्धस्य भस्मीकृतस्य कामो मदन एव तरुर्दाह्यत्वात् वृक्षस्तस्य, अमृतवर्षिणा जलवर्षिणा सुधादायिना च, दैवेन मेघसमूहेन देवसमूहेन च, भूयः पुनरपि, सम्भृत उत्पादितः, प्ररोहः अङ्कुरः, किं स्वित्, अङ्कुरवत् लोहिततलत्वात् तद्दलवत् कोमलाङ्गुलीमत्त्वाच्चेति भावः।

अत्र कामे तरुत्वारोपः श्लिष्टः, दैवे मेघत्वारोपश्चार्थ इत्येकदेशविवर्त्ति रूपकम्, शकुन्तलाहस्ते कामतरुत्वाङ्कुरत्वसन्देहात् तन्निरासाभावाच्च शुद्धसन्देहालङ्कारश्च, अनयो-र्गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः।

"दैवो मेघे सुरे राशौ स्यान्नपुंसकमिन्द्रिये।" "अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते।" इत्यादि च मेदिनी। "किंस्वित् प्रश्ने वितर्के च" इति विश्वः।

दैवानां समूह इति दैवम एवमादित्वादण्॥३३॥

(द) রাজা। এই দিকে প্রস্তরফলকের এক পার্শ্বে আমরা উপবেশন করি। (এই বলিয়া দুই জনেই পাদক্ষেপ করিয়া উপবেশন করিলেন।)

(ধ) রাজা। (শকুন্তলার হস্ত ধারণ করিয়া) কি আশ্চর্য্য স্পর্শ!।

কামবৃক্ষ, মহাদেবের কোপানলে দগ্ধ হইয়াছিল; তাহার পর বিধাতা অমৃতবর্ষা করিয়া পুনরায় উহার এই অঙ্কুর উৎপাদন করিয়া-ছেন কি? ॥৩৩॥

राजा। सहर्षमात्मगतम्। इदानीमस्मि विश्वसितः; भर्त्तृ-राभाषणपदमेतत्। प्रकाशम्। सुन्दरि! नातिश्लिष्टः सन्धिरस्य मृणालवलयस्य; यदि तेऽभिमतम्, तदन्यथा घटयिष्यामि। (प)

शकु। स्मितं कृत्वा। जधा दे रोअदि। (फ)

राजा। सव्याजं विलम्ब्य प्रतिमोच्य। सुन्दरि! दृश्यताम्—(ब)

(फ) यथा ते रोचते।

---

(न) शकु इति। स्पर्शं स्पर्शजनितरोमाञ्चादिकम्, रूपयित्वा अभिनीय। आर्य्यः पूज्यः श्वशुर इत्यर्थः तस्य पुत्र इत्यार्य्यपुत्रः, भर्त्तरि भार्य्याव्यवहृतोऽयं योगरूढ़ः शब्दः। त्वरतां यथास्थाने मृणालवलयनिवेशनायेति तात्पर्य्यम्। विलम्बे यदि कश्चित् पश्येदित्याशयः।

(प) राजेति। विश्वसितः अवश्यमेवेयं मे भार्य्या भविष्यतीत्ययं जातविश्वासः। तत्र हेतुमाह भर्त्तृरिति। एतत्, भर्त्तृराभाषणपदं वाचकः शब्दः। "आर्य्यपुत्रेति सम्बोध्यः पतिः पत्नीजनेन वा" इति भरतनाट्यशास्त्रादिति भावः। सन्धिः उभयाग्र-संयोगस्थलम्, नातिश्लिष्टः न सुषमभावेन मिलितः। तत् तदा। अन्यथा अन्यभावेन, घटयिष्यामि योजयिष्यामि।

(फ) शकु इति। नवयवातिशयदर्शनात् कौतुकेन स्मितम्। यथा ते रोचते, तथा कुरु इति शेषः।

---

(न) শকুন্তলা। ( স্পর্শজনিত রোমাঞ্চপ্রভৃতি অভিনয় করিয়া ) আর্য্যপুত্র! ত্বরা করুন, ত্বরা করুন।

(প) রাজা। ( আনন্দের সহিত স্বগত ) এখন বিশ্বস্ত হইলাম; কারণ, এই শব্দটী ভর্তার বাচক। ( প্রকাশ্যে ) সুন্দরি! এই মৃণাল-বলয়ের সন্ধিস্থান ভাল করিয়া লাগে নাই; সুতরাং যদি তোমার মত হয়, তবে অন্যরূপে সংযোজিত করি।

(ফ) শকুন্তলা। ( ঈষৎ হাস্য করিয়া ) আপনার যেমন অভিরুচি।

अयं स ते श्यामलतामनोहरं
विशेषशोभार्थमिवोज्झिताम्बरः ।
मृणालरूपेण नवो निशाकरः
करं समेत्योभयकोटिमाश्रितः ॥३४॥

(व) राजेति । सव्याजम् अन्यथाघटनव्याजेन सहितं यथा स्यात्तथा विलम्ब्य, प्रतिमोच्य मृणालवलयं परिधाप्य ।

अयमिति । अयं दृश्यमानः, स प्रसिद्धः, नवो नवोदितः मृणालरूपत्वात् एककला-मात्रोदित इत्यर्थः, निशाकरश्चन्द्रः, विशेषशोभार्थमिव आत्मनोऽधिकतरसौन्दर्यसम्पाद-नार्थमिव, सुन्दरस्थानगतत्वे सौन्दर्यवृद्धेः स्वाभाविकत्वादिति भावः, उज्झितं त्यक्तम् अम्बरमाकाशं येन स तथोक्तः सन्, श्यामलतया आकाशवदेव श्यामवर्णत्वेन मनोहरं कमनीयत्वादधिकतरसुन्दरम्, ते तव करं हस्तम्, मृणालरूपेण समेत्य प्राप्य, उभय-कोटिम् अग्रद्वयम्, आश्रितः प्राप्तः, आकाशे कोटिद्वयं विभक्तं वर्त्तते, तव हस्ते तु संयुक्तं जातमिति भावः ।

अत्र विशेषशोभार्थमिवेति फलोत्प्रेक्षा, प्रकृतमृणालनिषेधेन निशाकरस्य स्थापना-दपह्नुतिश्च ; अनयोर्गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः ।

अत्र श्यामलता मनोहरं करमिति दर्शनात् शकुन्तला श्यामाङ्गी आसीदिति प्रतीयते । केचित्तु श्यामवर्णलतावन्मनोहरमिति व्याचक्षते, तन्न तथात्वे श्यामेति विशेषणवैयर्थ्यम् । श्यामानामप्रियङ्गुलताबोधकत्वे वक्ष्ये संज्ञात्वात् पुंवद्भावाप्रसक्तेः ।

वंशस्थविलं वृत्तम् ॥३४॥

(ব) রাজা। ( ছলের সহিত বিলম্ব করিয়া, পরিধান করাইয়া ) সুন্দরি! দেখ—

একটী মাত্র কলাদ্বারা নবোদিত এই সেই চন্দ্র, বিশেষ সৌন্দর্য্য লাভ করিবার জন্যই যেন আকাশ পরিত্যাগ করিয়া, শ্যামবর্ণতানিবন্ধন মনোহর তোমার হাতখানি পাইয়া, মৃণালরূপে দুই অগ্রভাগের সম্মেলন প্রাপ্ত হইয়াছেন ॥৩৪॥

शकु। ण दाव णं पेक्खामि, पवणकम्पिदकसुप्पल-रेणुणा कलुसीकिदा मे दिट्ठी। (भ)

राजा। सस्मितम्। यद्यनुमन्यसे, तदहमेनां वदनमारुतेन विशदां करवाणि। (म)

शकु। तदो अणुकम्पिदा भवेअं ; किन्तु उण अहं ण दे वीससेमि। (य)

राजा। मा मैवम्। नवो हि परिजनः सेव्यानामादेशात् परं न वर्त्तते। (र)

(भ) न तावदेनं प्रेक्षे, पवनकम्पितकर्णोत्पलरेणुना कलुषीकृता मे दृष्टिः।

(य) ततः अनुकम्पिता भवेयम् ; किन्तु पुनरहं न ते विश्वसिमि।

(भ) शकु इति। एनं मृणालवलयम्। पवनकम्पितयोः वायुसञ्चालितयोः कर्णोत्पलयोः रेणुना परागेण, मे मम दृष्टिः नयनद्वयम्, कलुषीकृता आविलीकृता। अतएव नैनं प्रेक्षे इत्याशयः। "दृग् दृष्टिः" इत्यमरः।

(म) राजेति। कर्त्तव्यसेवाकौतुकात् स्मितमिति बोध्यम्। तत् तदा, एनां तव दृष्टिम्, वदनमारुतेन फुत्कारेण, विशदां निर्म्मलाम्।

(य) शकु इति। अनुकम्पिता भवता उपकृतत्वेन अनुगृहीता। ते तव "तस्य चानुकरोति हि" इत्यादिवत् शेषे षष्ठी, त्वां न विश्वसिमीत्यर्थः। यदि त्वं वदनमारुतेन दृष्टिं विशदां कुर्वन् अकस्मात् मम गण्डे चुम्बसीत्येव मे सन्देह इति भावः।

(ভ) শকুন্তলা। আমি ইহা দেখিতে পারিতেছি না। কারণ, বায়ুকম্পিত কর্ণোৎপলের রেণুতে আমার দৃষ্টি, অপরিষ্কার করিয়াছে।

(ম) রাজা। (ঈষৎ হাস্যের সহিত) যদি অনুমতি কর, তবে আমি মুখবায়ুদ্বারা ইহাকে পরিষ্কার করিয়া দিতে পারি।

(য) শকুন্তলা। তাহা হইলে অনুগৃহীত হই বটে ; কিন্তু আমি আপনাকে বিশ্বাস করি না।

शकु। अअं ज्जेव अच्चादरो अविस्सासजणओ। (ल)

राजा। स्वगतम्। नाहमिवं रमणीयमात्मनः सेवावसरं शिथिलयिष्ये। मुखमुन्नमयितुं प्रवृत्तः। (व)

शकु। प्रतिषेधं रूपयन्ती विरमति। (श)

(ल) अयमेव अत्यादरः अविश्वासजनकः।

(र) राजेति। मा मैवं न खलु न खलु सत्यं ब्रूहीति शेषः। हि यस्मात्। परिजनः सेवकः। परम् उपरि न वर्त्तते आदेशातिरिक्तं कार्य्यं न करोतीत्यर्थः। तथा चाह "तदा अनुकम्पिता भवेय" इत्यनेन सूचनभङ्ग्या आदिष्टं दृष्टिविशदीकरणं विना न किञ्चिदन्यत् करोमीत्याशयः।

(ल) शकु इति। अयमेव "परिजनः" "सेव्यानाम्" "आदेशात्" इति शब्दत्रयसूचितः। तथा च यथा भवतः परिजनत्वं मम च सेव्यत्वं मिथ्यापि भवता सत्यवदेव अभिहितम्, तथा "नवो हि" इत्यादि वाक्यमेव मिथ्यैव सत्यवदेव अभिहितमित्यभिप्रायः।

(व) राजेति। रमणीयं सुन्दरम्, निर्ज्जनत्वात् सम्मतत्वात् महामोदकरत्वाच्चेति भावः, आत्मनः स्वस्य मत्कर्त्तृकमित्यर्थः, सेवावसरं शुश्रूषाकरणावकाशम्, शिथिलयिष्ये सेवाया अकरणेन निष्फलीकरिष्ये इत्यर्थः, ईदृशावसरस्य पुनः प्राप्तिर्न स्यादिति भावः।

(র) রাজা। না না, এরূপ বলিও না। কারণ, নূতন সেবক, প্রভুদের আদেশের উপরে যায় না।

(ল) শকুন্তলা। এই বেশী আদরই অবিশ্বাসের কারণ।

(ব) রাজা। (স্বগত) আমি এমন সুন্দর নিজের পরিচর্য্যার সময়টীকে নিষ্ফল করিব না। (শকুন্তলার মুখ উত্তোলন করিতে প্রবৃত্ত হইলেন।)

(শ) শকুন্তলা। (নিবারণ অভিনয় করিয়া বিরত হইল।)

राजा । अयि मदिरेक्षणे ! अलमस्मदविनयाशङ्कया । (ष)

शकु । किञ्चिद् दृष्ट्वा व्रीड़ावनतमुखी तिष्ठति । (स)

राजा । अङ्गुलीभ्यां मुखमुन्नमय्य आत्मगतम् । (ह)

चारुणा स्फुरितेनायमपरिक्षतकोमलः ।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः ॥२५॥

(श) शकु इति । प्रतिषेधं राजकर्त्तृकमुखोत्तोलननिवारणम्, रूपयन्ती मुखस्यैव तिर्य्यक् कम्पनादिना अभिनयन्ती, विरमति राज्ञः अतिसन्निहिता भवितुं स्थगते ।

(ष) राजेति । मदिरे ! खञ्जनपक्षिणाविव ईक्षणे लोचने यस्यास्तत्सम्बोधनम् । अस्मत् मम सकाशात्, अविनयाशङ्कया धृष्टताचरणवासेन चुम्बनाशङ्कया अलम् । पूर्व्वमेव प्रतिश्रुतत्वात् न ते चुम्बनं करिष्यामीति भावः । अस्मदिति "वास्मदश्च" इति पञ्चम्या बहुवचनम् ।

(स) शकु इति । किञ्चिद् दृष्ट्वा राज्ञोऽननुन्मदभावं विलोक्य ।

(ह) राजेति । अङ्गुलीभ्यां हस्तद्वयस्य अङ्गुष्ठद्वयेन । उन्नमय्य उत्तोल्य ।

चारुणेति । अपरिक्षतः केनापि जनेन दन्तैरदष्टपूर्व्वः, अतएव कोमलः, अयं प्रियायाः शकुन्तलायाः अधर ओष्ठः, चारुणा मनोहरेण, स्फुरितेन मत्स्पर्शजनित-स्पन्दनेन अनुज्ञावाक्योच्चारणप्राक्कालीनकम्पनेन च, पिपासतः पातुमिच्छतः चुम्बितु-मिच्छत इत्यर्थः मम सम्बन्धे, अनुज्ञां चुम्बनानुमतिम्, ददातीव ।

अत्र कोमलत्वं प्रति अपरिक्षतपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गं क्रियोत्प्रेक्षा च, अनयोर्मिथो निरपेक्षतया संसृष्टिः । तथा स्पृहा नाम नाट्यालङ्कारश्च । तथा च दर्पणे—"आकाङ्क्षा रमणीयत्वाद्वस्तुनो या स्पृहा तु सा" ॥२५॥

(ষ) রাজা। হে খঞ্জননয়নে! আমা হইতে অশিষ্ট ব্যবহারের আশঙ্কা করিও না।

(স) শকুন্তলা। (একটু দেখিয়া, লজ্জায় অবনত মুখ হইয়া রহিল।)

(হ) রাজা। ( দুইটী অঙ্গুলীদ্বারা শকুন্তলার মুখ উত্তোলন করিয়া স্বগত )

শকু । পরিম্লাণমন্থরো বিঅ অজ্জউত্তো । (ক্ষ)

রাজা । কর্ণোৎপলসন্নিকর্ষাদীক্ষণমূঢ়োঽস্মি । ইতি মুখমারুতেন চক্ষুঃ সেবতে । (ক)

শকু । ভোদু, পইদিত্থদংসণম্হি সংবুত্তা । লজ্জেমি উণ অণুবআরিণী পিঅআরিণো অজ্জউত্তস্স । (খ)

(ক্ষ) পরিম্লানমন্থর ইব আর্য্যপুত্রঃ ।

(খ) ভবতু, প্রকৃতিস্থদর্শনাস্মি সংবৃত্তা । লজ্জে পুনরনুপকারিণী প্রিয়কারিণ আর্য্যপুত্রস্য ।

(ক্ষ) শকু ইতি । পরিম্লানে মদীয়নয়নাভ্যন্তরপ্রবিষ্টকর্ণোৎপলরেণূনাং সম্যগম্লানে, মন্থরো মন্দঃ অসমর্থ ইত্যর্থঃ, ফুৎকারদানে বিলম্বকরণাদিতি ভাবঃ । চাতুর্য্যাদি-বাত্মগতালোচনায়াং কিঞ্চিদ্বিলম্বকরণাৎ শকুন্তলায়া উক্তিরিয়মিতি বোধ্যম্ ।

(ক) রাজেতি । কর্ণোৎপলয়োঃ সন্নিকর্ষাৎ তব ঈক্ষণয়োরেব সান্নিধ্যাৎ ঈক্ষণে তব নয়ননিরূপণে মূঢ়ঃ অসমর্থঃ । তথা চ কিম্ ঈক্ষণম্, কিং বা কর্ণোৎপলমিতি নিরূপণে প্রথমমশক্ততয়া কিঞ্চিদ্বিলম্বো জাত ইতি ভাবঃ । এতেন ঈক্ষণয়োরুৎপল-সৌসাদৃশ্যং ব্যজ্যতে । মুখমারুতেন ফুৎকারেণ । সেবতে পরিষ্করোতি ।

(খ) শকু ইতি । প্রকৃতিস্থং তব ফুৎকারেণ কর্ণোৎপলরেণূনামপগমাৎ স্বভাবস্থং দর্শনং দৃষ্টির্যস্যাঃ সা । অনুপকারিণী অকিঞ্চিৎকরণাৎ, উপকারিণঃ চক্ষুঃপরিষ্করণাদিত্যাশয়ঃ । আর্য্যপুত্রস্য ভবতঃ সম্বন্ধে ।

পূর্ব্বে কেহই দন্তক্ষত করে নাই বলিয়া কোমল, প্রিয়তমার এই ওষ্ঠখানি, মনোহর স্পন্দনদ্বারা, পানাভিলাষী আমাকে যেন পান করিবার অনুমতি দিতেছে ॥৩৫॥

(ক্ষ) শকুন্তলা। আর্য্যপুত্র যেন বুঝিতে অসমর্থ হইতেছেন ।

(ক) রাজা। কর্ণোৎপল নিকটে থাকায় চোখ চিনিতে পারিতেছি না। (এই বলিয়া মুখবায়ুদ্বারা শকুন্তলার চোখ পরিষ্কার করিয়া দিলেন।)

রাজা । সুন্দরি ! কিমন্যৎ । (গ)

ইদমপ্যুপকৃতিপক্ষে সুরভি মুখং তে যদাঘ্রাতম্ ।

ননু কমলস্য মধুকরঃ সন্তুষ্যতি গন্ধমাত্রেণ ॥৩৬॥

শকু । সস্মিতম্ । অসন্তোসে উণ কিং করেদি ? । (ঘ)

(ঘ) অসন্তোষে পুনঃ কিং করোতি ? ।

(গ) রাজেতি । কিমন্যৎ উপকরিষ্যসীতি শেষঃ ।

ননু কিং মযা উপকৃতং যদন্যদুপকর্ত্তব্যং নাস্তীত্যাহ ইদমিতি । যৎ, তে তব, সুরভি মুখং সুগন্ধি বদনম্, আঘ্রাতং নয়নে ফুৎকারদানকালে কৃতগন্ধগ্রহণম্, ইদমাঘ্রাণমপি উপকৃতিপক্ষে ত্বৎকর্ত্তব্যোপকারকক্ষে, মযা স্বীকৃতমিত্যর্থঃ । নন্বিত্যবধারণে । তথাহি মধুকরো ভ্রমরঃ, কমলস্য পদ্মস্য, গন্ধমাত্রেণ কেবলেন গন্ধগ্রহণেনৈব সন্তুষ্যতি । মাত্রশব্দেন মধুপানব্যবচ্ছেদঃ । তথা চ যথা ভ্রমরঃ পদ্মস্য মধুপানং বিনা কেবলগন্ধগ্রহণেনৈব সন্তুষ্যতি তথা অহমপি তব মুখস্য চুম্বনং বিনা কেবলগন্ধগ্রহণেনৈব সন্তুষ্টোঽস্মি ; স চ গন্ধস্ত্বয়া নির্বাধমেব দত্ত ইত্যুপকার এব মে কৃতঃ । অতএব চ তে নাস্তি লজ্জাকারণমিতি ভাবঃ ।

অতএবাত্র দৃষ্টান্তোঽলঙ্কারঃ । উপগীতির্নাম জাতিঃ । যথা শ্রুতবোধে—

"আর্য্যোত্তরার্দ্ধতুল্যং প্রথমার্দ্ধমপি প্রযুক্তং চেৎ ।
কামিনি ! তামুপগীতিং প্রকাশয়ন্তে মহাকবয়ঃ ॥" ॥৩৬॥

(খ) শকুন্তলা । হউক, আমার দৃষ্টি স্বাভাবিক হইয়াছে । কিন্তু আর্য্যপুত্র এই প্রিয় কার্য্য করিলেন, আর আমি কোন উপকার করিলাম না বলিয়া লজ্জিত হইতেছি ।

(গ) রাজা । সুন্দরি ! আর কি উপকার করিবে ।

ইহাই আমি উপকারের পক্ষে স্বীকার করিয়াছি যে, তোমার সুবাসিত মুখখানির আঘ্রাণ করিয়াছি । দেখ—ভ্রমর, পদ্মের গন্ধমাত্রেই সন্তুষ্ট হইয়া থাকে ॥৩৬॥

राजा। इदम्। इति व्यवसितः। (ङ)

शकु। वक्त्रं ढौकते। (च)

नेपथ्ये। चक्कवाअवहु! आमन्तेहि सहचरं, णं उअत्थिदा रअणी। (छ)

(घ) शकु इति। स्वयं कौतुकाकं: कर्त्तव्यत्वात् स्मितम्। पुनः किन्तु, असन्तोषे गन्धमात्रेण सन्तोषाभावे, किं करोति स मधुकर इति शेषः। एतेन मन्मुखाघ्राणमात्रेण भवतोऽपि सन्तोषाभावे भवतापि किं कर्त्तव्यमिति व्यज्यते।

(ङ) राजेति। इदं मया क्रियमाणमेतत् चुम्बनम्, मधुकरः कमलस्य मधुपानाय करोतीति शेषः। इति उक्ता, व्यवसितः चुम्बितुमुद्यतः, न तु वस्तुत एव चुम्बितवान्, "शयनाधरपानादि" इत्यादिना दर्पणकृदादिभिस्तन्निषेधात् "कथमप्युन्नमितं न चुम्बितं तु" इति वक्ष्यमाणाच्चेति बोध्यम्।

एतेन शकुन्तलया पूर्वं ध्वनितस्याप्यर्थस्य क्रियाद्वारैव राज्ञा उत्तरं दत्तमिति सहृदयशिरोमणिना परमचमत्कारितयैवेदं निबद्धमिति समालोचनीयम्।

(च) शकु इति। वक्त्रं ढौकते राजकर्त्तव्यचुम्बननिवारणाय हस्ताङ्गुलिभिः मुखमावृणोति। "अत्यन्ताभिमतेऽपि वस्तुनि विधियोंसा निषेधात्मकः" इति न्यायात् अभिमतमपि चुम्बनं मुखावरणेन निषिद्धमित्यवधेयम्।

यद्यपि "टौकृ ढौकृ गत्यर्थे" इति ढौकधातुः गत्यर्थे पठितः, तथापि "मुहुरङ्गुलिसंवृताधरोष्ठम्" इति वक्ष्यमाणात् धातूनामनेकार्थत्वादत्र आवरणार्थे मन्तव्यः। अतएव सकर्म्मकत्वमपि।

(ঘ) শকুন্তলা। (ঈষৎ হাস্যের সহিত) ইহাতে সন্তোষ না হইলে কি করে?।

(ঙ) রাজা। ইহা করে। (এই বলিয়া চুম্বন করিতে প্রবৃত্ত হইলেন।)

(চ) শকুন্তলা। (অঙ্গুলীদ্বারা মুখ আবৃত করিল।)

शकु। कथं दत्त्वा ससम्भ्रमम्। अज्जउत्त! एसा क्खु

(क) चक्रवाकवधु! आमन्त्रयस्व सहचरम्, ननु उपस्थिता रजनी।

(क) अन्तरालगता अनसूया प्रियंवदा च दूरादागच्छन्तीं गौतमीमवलोक्य दुष्मन्तमपसारयितुं शकुन्तलां सङ्केतयति नेपथ्य इति। हे चक्रवाकवधु! चक्रवाकभार्य्ये चक्रवाकि! अन्यत्र दुष्मन्तवधु! शकुन्तले! सहचरं सहचरत्वेनैकत्रावस्थायिनं चक्रवाकं दुष्मन्तञ्च, सहचरत्वे नात्यन्तसन्निहिततया सहसा गौतम्युपस्थितौ गोपयितुमशक्यमिति दुष्मन्तपक्षे सहचरपदप्रयोगस्याशयः, आमन्त्रयस्व सादरमामन्त्र्य विसृज, प्रियजनस्य प्रस्थानकाले सादरामन्त्रणौचित्यादित्यभिप्रायः। ननु कथमामन्त्र्य विसृजामीत्याह ननित्यादि। ननु यस्मात्, रजनी चक्रवाकदम्पत्योर्वियोजिका रात्रिः, अन्यत्र युवयोः साहचर्य्यदर्शने अनर्थघटिका गौतमी, उपस्थिता। आवयोर्वियोजिकाया रात्रेरुपस्थितौ चक्रवाक्या चक्रवाकस्य प्रस्थानकालीनामन्त्रणमुचितमेवेति एकत्राशयः; अन्यत्र तु गौतमी आगत्य यदि सहचरभावेनैव दुष्मन्तं पश्येत्, तदा महान्तमनर्थं घटयेत्, अतः प्रागेवामन्त्र्य दुष्मन्तस्य विसर्जनं शकुन्तलाया उचितमित्याशयः।

"परिणतो दिवसः" "सायन्तने सवनकर्म्मणि" इत्यनयोर्वक्ष्यमाणतया तदानीं रजनी आगतप्रायेति सुष्ठूक्तं उपस्थिता रजनीति।

अत्र द्व्यर्थवचनविन्यासात् उभयपक्षेऽपि सुसम्बद्धत्वात् काव्ये योजनयोग्यत्वात् दुष्मन्तस्यापसारणात्मकप्रधानार्थान्तरसूचनाच्च इदं साहित्यदर्पणपरिगणितं चतुर्थं पताकास्थानम्। यथा तत्रैव—

"यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते।
आगन्तुकेन भावेन पताकास्थानकन्तु तत्॥
द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।
प्रधानार्थान्तराक्षेपी पताकास्थानकं परम्॥"

---

(छ) নেপথ্যে। হে চক্রবাকবধু! সাদর সম্ভাষণ করিয়া সহচরকে বিদায় দাও। যে হেতু, রাত্রি উপস্থিত হইয়াছে।

तादकस्सस्स धम्मकणोअसी मम वुत्तन्तोपलम्भणणिमित्तं अज्जा गोदमी आअच्छदि ; ता विडवान्तरिदो होहि (१)। (ज)

राजा। तथा। इत्येकान्ते स्थितः (२)। (झ)

ततः प्रविशति पात्रहस्ता गौतमी (३)। (ञ)

(ज) आर्य्यपुत्र! एषा खलु तातकखस्य धर्म्मकनीयसी मम वृत्तान्तोपलम्भन-निमित्तम् आर्य्या गौतमी आगच्छति ; तद्विटपान्तरितो भव।

(ज) शकु इति। कर्णं दत्त्वा 'चक्रवाकवहू' इत्यादि वाक्यं प्रति कर्णसम्मेय्य, ससम्भ्रमं सत्वरम्। धर्म्मकनीयसी धर्म्मतः कनिष्ठा भगिनी न तु वस्तुत एव कनिष्ठा भगिनीत्याशयः, गोतमस्यापत्यं स्त्री गौतमी, मम वृत्तान्तस्य उपलम्भननिमित्तम् उपलम्भार्थम्। तत् तस्मात्, विटपैः तरुलताशाखाभिः अन्तरित आवृतदेहः। अन्यथा सा आगत्य भवन्तं यदि पश्येत् तदा महान्तमनर्थं घटयेदिति भावः।

अत्र विद्रवो नाम गर्भसन्धेरङ्गम्। तथा च दर्पणे—

"शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मतः।"

(জ) শকুন্তলা। ( কাণ দিয়া ব্যস্ততার সহিত ) আর্য্যপুত্র! এই পিতা কণ্বের ধর্ম্মতঃ কনিষ্ঠা ভগিনী আর্য্যা গৌতমী আসিতেছেন ; অতএব আপনি তরুশাখায় আবৃত হউন।

(१) शकुन्तला। ससम्भ्रमम्। पौरव! असंसअं मम सरीरवुत्तन्तोव-लम्भस्स अज्जा गोतमी इधो एव्व आअच्छइ। दाव विडपान्तरिदो होसु।

(२) राजा। तथा। आत्मानमावृत्य तिष्ठति।

(३) गौतमी सख्यौ च। सख्यौ। इदो इदो अज्जा गोदमी। गौतमी। शकुन्तलामुपेत्य। जादे! अवि लहुसन्तापाइं अङ्गाइं? । शकुन्तला। अत्थि मे विसेसो। गौतमी। इमिणा दब्भोदएण णिराबाहं एव्व दे सरीरं होहिइ। शिरसि शकुन्तलामभ्युत्त्य। वच्छे! परिणदो दिवसो, एहि उडअं एव्व गच्छामो। प्रस्थिताः।

गौतमी। जादे! अच्चाहिदं सुणिअ आअदा; एदं शान्तिउदअं। इति समुत्थाप्य च। इध देवदासहाइणी चिट्ठसि?। (ट)

शकु। दाणिं ज्जेव अणसूआपिअंवदाओ मालिणीं ओदीस्साओ। (ठ)

(ट) जाते! अत्याहितं श्रुत्वा आगता; एतत् शान्त्युदकम्। इह दैवतासहायिनी तिष्ठसि।

(ठ) इदानीमेव अनसूयाप्रियंवदे मालिनीमवतीर्णे।

(झ) राजेति। तथा तदैव करोमीत्यर्थः। एकान्ते रहसि।

(ञ) तत इति। पात्रं जलभाजनं हस्ते यस्याः सा।

(ट) गौतमीति। जायत इति जाता आत्मजातुल्या तत्सम्बोधनम्। अत्याहितं तव शरीरसन्तापजनितं महाभयम्। आगता अहमिति शेषः। शान्त्युदकम् अभिमन्त्रितं सन्तापशान्तिकरं जलम्, मया त्वदर्थमानीतमिति शेषः। इति अत्र कश्चित् शकुन्तलायाः सहायो वर्त्तते न वेति परीक्षार्थं सर्वतो विलोक्य, समुत्थाप्य उपविष्टां शकुन्तलाम् उटजं नेतुं दण्डायमानीकृत्य। दैवतासहायिनी सहचरी यस्याः सा एकाकिनीत्यर्थः। काकुस्वरेण प्रश्नो व्यज्यते।

"अत्याहितं महाभीतिः कर्म्म जीवानपेक्षि च" इत्यमरः।

(ঝ) রাজা। তাহাই। ( এই বলিয়া গুপ্তস্থানে থাকিলেন। )

(ঞ) তদনন্তর পাত্রহস্তে গৌতমীর প্রবেশ।

(ট) গৌতমী। বৎসে! মহাভয়ের কারণ শুনিয়া আসিয়াছি। এই শান্তির জল। ( দেখিয়া, শকুন্তলাকে উঠাইয়া ) এখানে কেবল দেবতাসহায়ে রহিয়াছিস্।

(ঠ) শকুন্তলা। অনসূয়া আর প্রিয়ংবদা এখনই মালিনীনদীতে গিয়াছে।

गौतमी। शान्त्युदकेन शकुन्तलामभ्युक्ष्य। जादे! णिराबाधा मे चिरं जीव। अवि लहुसन्दावाइं अङ्गाइं ?। इति स्पृशति। (ड)

शकु। अम्मो! अत्थि विसेसो। (ढ)

गौतमी। परिणदो दिअसो; ता एहि उडअं ज्जेव गच्छह्म। (ण)

(ड) जाते! निराबाधा मे चिरं जीव। अपि लघुसन्तापानि अङ्गानि ?।

(ढ) अहो! अस्ति विशेषः।

---

(ठ) शकु इति। मालिनीं नदीम्, अवतीर्य जलमानेतुं गतं।

(ड) गौतमीति। निराबाधा एतच्छान्त्युदकाभ्युक्षणादेव निष्पीडा सती। मे मत्सम्बन्धिनी त्वम्। अपिशब्दः प्रश्ने। लघुः शान्त्युदकाभ्युक्षणात् अल्पीभूतः सन्तापो येषु तानि तथाविधानि, जातानि किमिति तात्पर्य्यम्। इति उक्त्वा स्पृशति शकुन्तलाया अङ्गानीति शेषः।

अत्र स्वास्थ्य जलदानात् समर्हो नाम गर्भसन्धिरङ्गम्—"समर्हः पुनः। स्वामदानार्थ-सम्पन्नः" इति दर्पणलक्षणात्।

(ढ) शकु इति। विशेषः पूर्वसन्तापस्य किञ्चिद्वैषम्यम् उपशम इति यावत्, अस्ति भूतः। उत्पश्याख्यसत्ताव अत्यर्थः, अतीतसामीप्ये च वर्त्तमाना।

(ण) गौतमीति। परिणतः अवसितः। उटजमेव पर्णशालामेव। एकाकिन्या रात्राववस्थानस्य असङ्गतत्वादिति भावः।

"पर्णशालोटजोऽस्त्रियाम्" इत्यमरः।

---

(ড) গৌতমী। (শান্তির জলদ্বারা শকুন্তলাকে সিক্ত করিয়া) বৎসে! তুই আমার পীড়াবিহীন হইয়া চিরকাল জীবিত থাক্। তোর শরীরের তাপ কমিয়াছে ত? (এই বলিয়া শকুন্তলার গাত্র স্পর্শ করিলেন।)

(ঢ) শকুন্তলা। কিছু উপশম হইয়াছে।

शकु । कथञ्चिदुत्थाय स्वगतम् । हिअअ ! पढमं सुहोवणदे मणोरहे कालहरणं करेसि ; सम्पदं अणुभव दाव दुक्खं । पदान्तरे प्रतिनिवृत्य प्रकाशम् । लदाघर ! सन्दावहर ! आमन्तेमि तुमं पुणो वि परिभोअत्थं । इति निष्क्रान्ते (१)। (त)

(थ) परिणतो दिवसः ; तदेहि उटजमेव गच्छावः ।

(त) हृदय ! प्रथमं सुखोपनते मनोरथे कालहरणं करोषि, साम्प्रतमनुभव तावत् दुःखम् । लतागृह ! सन्तापहर ! आमन्त्रयामि त्वां पुनरपि परिभोगार्थम् ।

(त) शकु इति । कथञ्चित् अनिच्छावशात् कष्टेनेत्यर्थः । मनोरथे मनोरथ-विषये प्रियतमे दुष्मन्ते, सुखोपनते दूतीप्रेषणाद्यनुष्ठानाभावात् अनायासेनैवोपस्थिते सति कालहरणं नानाच्छलेन सम्भोगे कालविलम्बम् । साम्प्रतं गौतम्यागमात् सम्भोगा-सम्भवसमये, दुःखं मदनपीडाजनितकष्टम् । पदान्तरे पदक्षेपान्तरे कतिपयं पदक्षेपं कृत्वा अपरस्मिन् पदक्षेपे कर्त्तव्ये इत्यर्थः, तावत्पर्य्यन्तकरणानन्तरमेव, आमन्त्रणाभावे राजा यदि पुनर्नागच्छेदिति विभाव्येत्याशयः ।

हे लतागृह ! निकुञ्ज ! पक्षे तदभ्यन्तरगत प्रियतम दुष्मन्त ! हे सन्तापहर ! तापनाशक ! एकत्र छायादानात् अपरत्र सम्भोगाशाजननादिति भावः, पुनरपि परिभोगार्थं तदाभ्यन्तरे अवस्थानेन तत्रैव सम्भोगार्थं पक्षे सुरतसुखभोगार्थञ्च, त्वां लतागृहं दुष्मन्तञ्च, आमन्त्रये सम्भाषे, आह्वये च । एकत्र आश्रयदातुः सम्भाषणमवश्य-मेवोचितमिति, अन्यत्र पुनः सम्भोगाय यथा दूतीप्रेषणादि न कर्त्तव्यं स्यात्, एतदाह्वानेन तथा करणीयमित्यभिप्रायः ।

(থ) গৌতমী। দিন শেষ হইয়া আসিয়াছে; অতএব আয়, পর্ণশালাতেই যাই।

(१) शकुन्तला । आत्मगतम् । हिअअ ! पढमं एव्व सुहोवणए मणोरहे कादरभावं ण मुञ्चसि । साणुसअविहडिअस्स कहं दे संपदं सन्दावो । पदान्तरे स्थित्वा प्रकाशम् । लदावलअ ! सन्दावहारअ ! आमन्तेमि तुमं भूओवि परि-भोअस्स । दुःखेन निष्क्रान्ता शकुन्तला सहेतराभिः ।

राजा। पूर्वस्थानमुपेत्य सनिश्वासम्। अहो! विघ्नवत्यः प्रार्थितार्थसिद्धयः। मया हि—(थ)

मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं, न चुम्बितं तु (१) ॥२६॥

अत्र सहसैव दुष्मन्तस्य गुणवदर्थसम्पत्तेः परमप्रीतिकरणाच्च इदं साहित्यदर्पण-परिगणितं प्रथमं पताकास्थानम्। तथा च दर्पणे—

"सहसैवार्थसम्पत्तिः गुणवत्युपचारतः।
पताकास्थानकमिदं प्रथमं परिकीर्त्तितम्॥"

ईदृशध्वनिनिर्म्माणं रमणीनामिव प्रायिकं परमचमत्कारि च। अतएवोक्तं नैषधे—"विजृम्भितं यस्य किल ध्वनेरिदं विदग्धनारीवदनं तदाकरः।"

निष्क्रान्ते गौतमीशकुन्तले इति शेषः।

(घ) राजेति। पूर्वस्थानं शिलातलम्। प्रार्थितानाम् अर्थानां विषयाणां सिद्धय, विघ्नवत्यः प्रायेणैव सविघ्नाः। अहो इति विषादे। हि तथाहि।

मुहुरिति। मुहुरिति सर्वत्र सम्बध्यते मुहुर्वारं वारम्, अङ्गुलिभिः संवृतः

(ত) শকুন্তলা। ( কষ্টে গাত্রোত্থান করিয়া স্বগত ) হে হৃদয়! অভীষ্ট জন অনায়াসে উপস্থিত হইলে প্রথমে কালক্ষেপ করিয়াছ; এখন দুঃখ অনুভব কর। ( কতিপয় পদক্ষেপের পর ফিরিয়া প্রকাশ্যে ) হে সন্তাপনাশক! লতাগৃহ! আবারও সম্ভোগের জন্য তোমাকে আহ্বান করি। ( এই বলিয়া উভয়ে চলিয়া গেল। )

(থ) রাজা। ( পূর্ব্বস্থানে আসিয়া নিশ্বাস ত্যাগ করিয়া ) হায়! প্রার্থিত বিষয়ের সিদ্ধি, বিঘ্নসঙ্কুলই হইয়া থাকে। কারণ—

(१) न चुम्बितं तत्।

क्व नु खलु सम्प्रति गच्छामि। अथवा, इहैव प्रियापरिभुक्ते लतामण्डपे मुहूर्त्तं तिष्ठामि। सर्वतोऽवलोक्य (१) (२)

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
कान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः।

चुम्बननिवारणाय आहतः अधरोष्ठः चुम्बनस्थानत्वात् निम्नोष्ठो यस्य तत्, प्रतिषेधाक्षरैः चुम्बननिषेधकोच्चारितवर्णैः विक्लवं विह्वलं तथापि अभिरामं मनोहरम्, तथा अंसे स्कन्धोपरि विवर्त्तते चुम्बननिवारणायैव परावर्त्तत इति अंसविवर्त्ति, पक्ष्माक्षि लोमान्वितयोः सन्तीति पक्ष्मले सुन्दरत्वात् प्रशस्तलोमयुक्ते अक्षिणी चक्षुषी यस्यास्तस्याः शकुन्तलायाः, मुखं वदनम्, कथमपि कष्टेन उन्नमितं नयनपरिष्कारकरणव्याजेन उत्तोलितम्, तु किन्तु, न चुम्बितम्। हन्त! महानेव ममायं प्रमादोऽभूदिति भावः।

अत्र "ओष्ठाधरौ तु रदनच्छदौ दशनवाससी" इत्यमरोक्तेः "नभतेऽधरबिम्ब इत्यदः पदमस्या रदनच्छदो वदन्" इति नैषधोक्तेश्च अधरोष्ठपदयोः पर्य्यायतया आपाततस्तदर्थस्य पुनरुक्तताप्रतीतेः किन्तु अधरपदस्य निम्नार्थकतया तत्समाधानात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कारः। तथा पश्चात्तापो नाम नाट्यालङ्कारश्च—"मोहावधीरितार्थस्य पश्चात्तापः स एव तु" इति दर्पणलक्षणात्। उपवृत्तं नाम वृत्तम् ॥३६॥

(२) क्वेति। प्रियया शकुन्तलया परिभुक्ते व्यवहृते।

শকুন্তলা অঙ্গুলীদ্বারা বার বার নীচের ওষ্ঠখানি আবৃত করিয়াছিল, নিষেধবাক্য উচ্চারণ করিবার সময়ে মুখমণ্ডল বার বার বিহ্বল অথ চ মনোহর হইয়াছিল এবং তাহা বার বার কাঁধের উপরে ফিরিয়া গিয়াছিল, সুনয়না শকুন্তলার এহেন মুখমণ্ডল আমি কোন ক্রমে উত্তোলন করিয়াছিলাম, কিন্তু চুম্বন করি নাই।৩৬॥

(২) এখন কোথায় যাই; অথবা এই প্রিয়াভুক্ত লতামণ্ডপেই কিছু কাল থাকি। (সকল দিকে দৃষ্টিপাত করিয়া)

(१) प्रियापरिभुक्तमुक्ते लतावलये मुहूर्त्तं स्थास्यामि।

हस्ताद्भ्रंष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहादीशोऽस्मि शून्यादपि (१) ॥३७॥

विचिन्त्य। अहो धिगसम्यक् चेष्टितं प्रियां समासाद्य कालहरणं कुर्वता मया। तदिदानीम्—(ध)

ननु कथमत्र तिष्ठसीत्याह तस्या इति। तस्याः शकुन्तलायाः, शरीरलुलिता सन्तापान्मुहुः पार्श्वपरिवर्त्तनेन देहविमर्द्दिता, इयं दृश्यमाना, शिलायां प्रस्तरखण्डोपरि, पुष्पमयी शय्या, नलिनीपत्रे पद्मलतापत्रे, नखैः अर्पितो दत्तः लिखित इत्यर्थः, कान्तो मनोहरः, एष मन्मथलेखः "तुज्झ ण आणे हिअअं" इत्यादिरूपा मदनसम्बन्धिनी लिपिः एष मन्मथलेखस्तु अक्षरपरिचयाभावादनवधानत्वाद्वा गौतम्या न परिलक्षित इत्यवधेयम। हस्तात् भ्रष्टं पतितम्, इदं बिसाभरणं मृणालवलयम्, सर्वत्र तिष्ठतीति शेषः। इति एतेषु पदार्थेषु, आसज्यमाने प्रियाया वस्तुत्वादिव स्वयमेव सम्बध्यमाने ईक्षणे चक्षुषी यस्य स तथोक्तः अहम्, शून्यात् प्रियारहितादपि, वेतसगृहात्, सहसा निर्गन्तुं न ईशः न समर्थोऽस्मि, एतैः पदार्थैरेवाकर्षणात्, विलम्बे तु उपायाभावात् निर्गन्तुं शक्ष्यामित्यत्रेति भावः।

अत्र निर्गमनाभावं प्रति आसज्यमानेक्षणपदस्यार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्, शून्यत्वरूपे कारणे सत्यपि तत्कार्य्यभूतनिर्गमनानुत्पत्तेर्विशेषोक्तिः, अशून्यात् का कथा शून्यादपि इत्यर्थस्यापतनादर्थापत्तिश्च इत्येतेषां गुणप्रधानभावेनाङ्गाङ्गिभावात् सङ्करः। शार्द्दूलविक्रीड़ितं वृत्तम् ॥३७॥

(ध) विचिन्त्येति। वितर्क्येति तात्पर्य्यम। अहो धिक् इति विषादे।

প্রস্তরখণ্ডের উপরে, শকুন্তলার দেহমর্দ্দিত এই পুষ্পশয্যা রহিয়াছে; নখদ্বারা পদ্মপত্রে লিখিত মনোহর এই কামলিপি দেখা যাইতেছে এবং শকুন্তলার হস্ত হইতে নিপতিত এই মৃণালবলয় রহিয়াছে; এই সকল বস্তুতে আমার দৃষ্টি সংসক্ত হওয়ায় আমি এই শূন্য বেতসগৃহ হইতেও হঠাৎ নির্গত হইতে পারিতেছি না ॥৩৭॥

(१) असज्जमानेक्षणो···शक्नोमि शून्यादपि।

रहः प्रत्यासत्तिं यदि सुवदना यास्यति पुन-
र्न कालं हास्यामि, प्रकृतिदुरवापा हि विषयाः।
इति क्लिष्टं विघ्नैर्गणयति च मे मूढ़हृदयं
प्रियायाः प्रत्यक्षं किमपि च तथा कातरमिव (१) ॥३८॥

प्रियां शकुन्तलाम्, समासाद्य प्राप्य, कालहरणं रमणे कालविलम्बम्, कुर्वता मया, असम्यक् चेष्टितम् असङ्गतं कृतम्। विलम्बकरणमेव असङ्गतं कृतम्, सहसैव रमणमुचितमासीदिति भावः।

अत्र वितर्कबोधकवाक्योपन्यासात् रूपं नाम गर्भसन्धेरङ्गम्—"रूपं वाक्यं वितर्कवत्" इति दर्पणलक्षणात्।

रह इति। सुवदना सुन्दरमुखी शकुन्तला, यदि पुनरपि, रहो निर्जनस्थाने, प्रत्यासत्तिं मम सन्निधानम्, यास्यति प्राप्स्यति, तदा कालं न हास्यामि तादृशरमणावसरं न परित्यक्ष्यामि। हि यस्मात्, विषया भोग्यपदार्थाः, प्रकृत्या स्वभावेनैव दुरवापा दुर्लभाः। अतएव प्राप्तिमात्रमेव भोग उचित इत्याशयः। विघ्नैः गौतमीसन्दर्शनाद्यन्तरायैः, क्लिष्टं लिप्सितसुखालाभात् दुःखितम्, मे मम मूढ़हृदयं कर्त्तव्यावधारणाक्षमं चित्तं कर्त्तृ, इदानीं प्रियाया अप्राप्तिकाले, इति इत्थम्, गणयति विविनक्ति च; च अग्र च, प्रियायाः शकुन्तलायाः, प्रत्यक्षं समक्षम्, तथा तादृक्, किमपि अनिर्वचनीयम्, कातरमिव कर्त्तव्यविह्वलमिव, आसीदिति शेषः; त्वरितरमणप्रवृत्त्यजननादित्यभिप्रायः।

अत्र प्रथमार्द्धे सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। यदीत्युक्ता तदेत्यनुक्तावपि तस्य स्वभावादेवावगतेर्न न्यूनपदत्वदोषः; "क्वचिन्न दोषो न गुणः" इति साहित्यदर्पणात्।

"विविक्त विजनाच्छन्ननिःशलाकास्तथा रहः। रहश्चोपांशु चालिङ्गे" इत्यमरः। अव्ययत्वादलिङ्ग इत्यर्थः। शिखरिणी वृत्तम् ॥३८॥

(ध) (চিন্তা করিয়া) হায়! আমি প্রিয়তমাকে পাইয়া পর কালক্ষেপ করিয়া উপযুক্ত কার্য্য করি নাই। অতএব এখন—

(१) क्वचित् स्त्रीक्लीऽयं नास्ति।

नेपथ्ये। भो भो राजन्! (१) (न)

सायन्तने सवनकर्म्मणि सम्प्रवृत्ते
वेदिं हुताशनवतीं परितः प्रकीर्णाः।
छायाश्चरन्ति बहुधा भयमादधानाः
सन्ध्याभ्रकूटकपिशाः पिशिताशनानाम् (१) ॥३८॥

(न) नेपथ्ये इति। तपस्विनामुक्तिरियम्।

सायन्तने इति। सायन्तने सन्ध्याकालीने, सवनकर्म्मणि यज्ञकार्य्ये, सम्प्रवृत्ते कृतारम्भे सति, हुताशनवतीं प्रज्वलितवह्निम्, वेदिं यज्ञभूमिम्, परितः समन्तात् वेद्याः सर्वासु दिक्षु इत्यर्थः प्रकीर्णाः पिशिताशनैरेव विक्षिप्ताः, बहुधा नानाप्रकारेण हुङ्कारकरणकङ्कालवर्षणादिना, भयम्, आदधाना जनयन्त्यः, सन्ध्याभ्रकूटवत् सन्ध्याकालीनमेघपुञ्जवत् कपिशाः कृष्णपीतवर्णाः, पिशिताशनानां राक्षसानाम्, छायाः, चरन्ति इतस्ततो भ्रमन्ति। अतएव तेषां विताडनाय सत्वरमागम्यतामिति भावः।

अत्र सन्ध्याभ्रकूटकपिशा इति समासगता लुप्तोपमा, तथा पिश पिश इति व्यञ्जनानामनेकधा सकृत् साम्यात् छेकानुप्रासः, पुनस्तालव्यशकारवर्णोपादानात् वृत्त्यनुप्रासश्च; इत्येतेषामेकाश्रयानुप्रवेशरूपः सङ्करः।

"यावज्जीवमग्निहोत्रं जुहोति, यदग्नये च प्रजापतये च सायंप्रातर्जुहोति" इति श्रुतेः सायन्तन इति हुताशनवतीमित्यनेन छायादर्शनसम्भव उक्त इति न अपुष्टार्थत्वदोषः।

সুমুখী শকুন্তলা যদি পুনরায় নির্জ্জন স্থানে নিকটে উপস্থিত হয়, তবে আর কালক্ষেপ করিব না। কারণ, বিষয়সম্ভোগ স্বভাবতই দুর্লভ; বিঘ্নবশতঃ দুঃখিত আমার মূঢ় মন এখন এইরূপ বিবেচনা করিতেছে; অথ চ প্রিয়তমার সমক্ষে তখন যেন অনির্বচনীয় কাতর হইয়াছিল ॥৩৮॥

(ন) নেপথ্যে। মহারাজ! মহারাজ!

(१) आकाशे राजन्!। (२) परितः प्रयस्ताः।···सन्ध्यापयोदकपिशाः।

राजा। आकर्ण्य सावष्टम्भम्। भो भोस्तपस्विनः! मा भैष्ट मा भैष्ट, अयमहमागत एव (१)। इति निष्क्रान्तः। (प)

## तृतीयोऽङ्कः ॥०॥

"क्रतौ स्नाने च सवनम्" इति त्रिकाण्डशेषः। "अभ्रं मेघो वारिवाहः" इत्यमरः। "कूटोऽस्त्री निश्चले राशौ" इत्यादि मेदिनी।

सायं (काले) भवतीति सायन्तनं "सायं चिरम्" इत्यादिना तनट्। वेदिमिति परित इत्यस्य योगे "तसोभयाभिपरिसर्वैः" इत्यनेन द्वितीया। पिशितं मांसम् अश्नन्तीति पिशिताशना "नन्द्यादेर्युः" इति युप्रत्ययः। वसन्ततिलका वृत्तम् ॥३८॥

(प) राजेति। अवष्टम्भेन और्जित्येन सहेति सावष्टम्भम्। अवपूर्वस्य स्तम्भेः "अवाद्गौर्जित्यनिकटाश्रयेषु" इति षत्वम्। मा भैष्ट राक्षसेभ्यो भयं मा कुरुत। सम्भ्रमे द्विरुक्तिः; "माङ्योगे अद्यतनी" इति माङ्योगे भीधातोरद्यतन्या मध्यमपुरुष-बहुवचनम्। अयमहमागत एव राक्षसताडनायेति शेषः। अतएव मा भैष्ट इति भावः।

अत्र त्रोटकं नाम गर्भसन्धेरङ्गम्—"त्रोटकं पुनः। संरब्धवाक्" इति दर्पणलक्षणात्।

इति महामहोपाध्याय भारताचार्य श्रीहरिदाससिद्धान्तवागीशभट्टाचार्यविरचितायाम् अभिज्ञानशकुन्तलटीकायामभिज्ञानकौमुद्यां तृतीयाङ्कविवरणं समाप्तम् ॥०॥

---

সন্ধ্যাকালীন যজ্ঞ আরম্ভ হইলে, অগ্নিযুক্ত যজ্ঞবেদির চতুর্দ্দিকে বিক্ষিপ্ত সন্ধ্যাকালের মেঘসমূহের ন্যায় পিঙ্গলবর্ণ ও ভয়জনক রাক্ষসগণের নানাপ্রকার ছায়া বিচরণ করিতেছে ॥৩৮॥

(প) রাজা। (শুনিয়া তেজের সহিত) ওহে ওহে তপস্বিগণ! আপনারা ভীত হইবেন না, ভীত হইবেন না; এই আমি আসিয়াছিই। (এই বলিয়া চলিয়া গেলেন।)

## তৃতীয় অঙ্ক ॥০॥

(১) राजा। अयमहमागच्छामि।

# चतुर्थोऽङ्कः ।

—०:*:०—

ततः प्रविशतः कुसुमावचयमभिनयन्त्यौ सख्यौ । (क)

अनसूया । हला पिअंवदे ! जइ वि गन्धव्वेण विवाहविहिणा णिव्वुत्तकल्लाणा पिअसही सउन्तला अणुरूवभत्तिभाइणी संवुत्ता, तहवि मे ण णिव्वुदं हिअअं (१) । (ख)

(ख) हला प्रियंवदे ! यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा प्रियसखी शकुन्तला अनुरूपभर्तृभागिनी संवृत्ता, तथापि मे न निर्वृतं हृदयम् ।

---

(क) तत इति । कुसुमावचयम् उद्यानस्थतरुभ्यः पुष्पचयनम् । सख्यौ अनसूयाप्रियंवदे ।

(ख) अनेति । गान्धर्वेण 'त्वं मे भार्य्या, त्वं मे पतिः' इति नियमपूर्वकेण, "गान्धर्वः समयान्मिथः" इति याज्ञवल्क्यवचनात्, विवाहविधिना परिणयव्यापारेण, निर्वृत्तं निष्पन्नं कल्याणं मङ्गलम् अभिप्रेतार्थसिद्धिर्यस्याः सा । अनुरूपं भर्त्तारं भजत इति अनुरूपभर्तृभागिनी "युजभज" इत्यादिना घिणुन् । निर्वृतं सुस्थम् ।

एतदारभ्य षष्ठाङ्कसमाप्तिपर्य्यन्तो विमर्षसन्धिः । तथा चात्र शकुन्तलादुष्मन्तयोर्गान्धर्वविवाहनिष्पत्त्या अपायाभावात् निश्चितप्राप्तिरूपा नियताप्तिर्नाम चतुर्थी कार्य्यावस्था निबद्धा । यथा दर्पणे—

"अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता ।"

तथा शकुन्तलादुष्मन्तयोः परस्परप्राप्तिरूपं यन्मुख्यफलं तदुपायभूतस्यानुरागस्य

---

(क) তদনন্তর পুষ্পচয়ন অভিনয় করতঃ সখীদ্বযের প্রবেশ ।

---

(१) पिअंवदे ! जइवि गन्धव्वेण विहिणा णिव्वुत्तकल्लाणा सउन्तला अणुरूवभत्तुगामिणी संवुत्तेति णिव्वुदं मे हिअअं, तहवि एत्तिअं चिन्तणीअं ।

प्रियंवदा। कधं विअ ?। (ग)

अन। अज्ज सो राएसो इट्ठिपरिसमत्तीए इसिहिं विसज्जिदो अत्तणो णअरं पविसिअ अन्तेउरसमागमादो इमं जणं सुमरेदि ण वेत्ति (१)। (घ)

(ग) कथमिव ?।

(घ) अद्य स राजर्षिः इष्टिपरिसमाप्त्या ऋषिभिर्विसर्जितः आत्मनो नगरं प्रविश्य अन्तःपुरसमागमादिमं जनं स्मरति न वेति।

गान्धर्वविवाहनिष्पत्त्या गर्भसम्भेदेनया अधिकोद्भेदः ; स च दुर्वासःशापेन तन्निबन्धनविस्मरणेन च सान्तरायश्च। यथा तत्रैव—

"यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः।
शापाद्यैः सान्तरायश्च स विमर्ष इति स्मृतः ॥"

दर्पणकृतापीदमेवोदाहृतम्। अस्य चापवादादीनि त्रयोदशाङ्गानि यथास्थानं दर्शयिष्यामः।

(ग) प्रियमिति। निर्वृतिहेतौ सत्यपि कथमिव न निर्वृतमित्यर्थः।

(घ) अद्येति। स राजर्षिर्दुष्मन्तः, इष्टिपरिसमाप्त्या यज्ञसमापनेन हेतुना। विसर्ज्जितः नगरगमनायानुमतः। अन्तःपुरसमागमात् अन्तःपुरस्थरमणीसम्भोगात्, इमं जनं शकुन्तलाम्, स्मरति न वा, इति हेतोः, मम हृदयं न निर्वृतमित्यन्वयः। नागरीसम्भोगसुखलाभे वनेचर्या विस्मरणस्यैव सम्भवादित्याशयः।

(খ) অনসূয়া। প্রিয়ংবদা! যদিও গান্ধর্ব্ববিবাহে প্রিয়সখী শকুন্তলার মঙ্গল হইয়াছে এবং সে অনুরূপ ভর্ত্তার হাতে পড়িয়াছে, তথাপি আমার মন সুস্থ হইতেছে না।

(গ) প্রিয়ংবদা। কেন ?।

(१) अज्ज सो राएसी इट्ठिं परिसमाविअ इसीहिं विसज्जिदो अत्तणो णअरं पविसिअ अन्तेउरसमागमी इदीगदं वुत्तन्तं सुमरइ वा ण वत्ति।

प्रियं । एत्थ दाव वीसत्था होहि । णहि तादिसा आकिदि-विसेसा गुणविरहिणो होन्ति । एत्तिअं उण चिन्तणीअं, तादो तीत्थजात्तादो पड़िणिउत्तो इमं वुत्तन्तं सुणिअ ण आणे किं पड़िवज्जिस्सदित्ति (१) । (ङ)

(ङ) अत्र तावत् विस्रब्धा भव। नहि तादृशा आकृतिविशेषा गुणविरहिणो भवन्ति। एतावत् पुनश्चिन्तनीयम्, तातस्तीर्थयात्रातः प्रतिनिवृत्तः इमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति।

(ङ) प्रियमिति। अत्र दुष्मन्तकर्त्तृकशकुन्तलास्मरणे, विस्रब्धा निःसन्देहा। हि यस्मात्, तादृशा दुष्मन्तसदृशाः, आकृतिविशेषा उत्कृष्टाकारा जनाः, गुणं कृतकार्य्य-स्मरणादिकं धर्म्मं विरहयन्ति त्यजन्तीति तादृशा न भवन्ति। पुनः किन्तु, एतावत् एतत्, चिन्तनीयं संशयनीयम्। तातः कण्वः। इमं वृत्तान्तं दुष्मन्ताय शकुन्तलाया आत्मदानवार्त्ताम्। किं प्रतिपत्स्यते किं मनसि करिष्यति, हृष्टस्तुष्टो वा भविष्य-तीत्यर्थः।

(घ) অনসূয়া। যজ্ঞ সমাপ্ত হওয়ায় মুনিরা সেই রাজর্ষিকে আজ বিদায় দিয়াছেন; এখন তিনি রাজধানীতে প্রবেশ করিয়া অন্তঃপুর-বাসিনী রমণীগণের সহিত মিলনের পর এই ব্যক্তিকে স্মরণ করেন কি না এই জন্য।

(ঙ) প্রিয়ংবদা। এবিষয়ে তুমি বিশ্বস্ত হও; কারণ, দুষ্মন্তের ন্যায় উৎকৃষ্ট আকৃতির লোক গুণহীন হয় না। তবে ইহা চিন্তা করি যে, পিতা কণ্ব তীর্থযাত্রা হইতে ফিরিয়া আসিয়া এই ঘটনা শুনিয়া, কি মনে করিবেন।

(१) प्रियंवदा। वीसद्धा होसु। ण तादिसा आकिदिविसेसा गुणविरोहिणो होन्ति। तदो दाणिं इमं वुत्तन्तं सुणिअ ण आणे किं परिवज्जिस्सइ त्ति।

अन। जधा मं पुच्छसि, तधा अभिमदं तादस्स (१)। (च)

प्रिय०। कधं विअ ?। (छ)

अन। अणुरूवस्स वरस्स हत्थे कण्णआ पडिवादणीअत्ति अअं दाव पढमो कप्पो। तं जइ देव्वं सम्पादेदि, णं कअत्थो गुरुअणो (२)। (ज)

(च) यथा मां पृच्छसि, तथा अभिमतं तातस्य।

(छ) कथमिव ?।

(ज) अनुरूपस्य वरस्य हस्ते कन्यका प्रतिपादनीयेति, अयं तावत् प्रथमः कल्पः। तं यदि दैवं सम्पादयति, ननु कृतार्थो गुरुजनः।

(च) अनेति। यथा मां पृच्छसि 'इमं वृत्तान्तं श्रुत्वा तातः किं प्रतिपत्स्यते' इति जिज्ञाससे, तथा तादृक् वृत्तमेव दुष्मन्तहृद्ग्रहणाय आत्मदानमेवेत्यर्थः, तातस्य कण्वस्य अभिमतम्।

(ज) अनेति। प्रतिपादनीया दातव्या, इति प्रथमः कल्प उत्तमः पक्षः। दैवं कर्तृ, तं प्रथमं कल्पम्। ननु निश्चये। तदा गुरुजनस्तातादिः, कृतार्थः दैवेनैव सम्पादितस्वोद्देश्यः। अतस्तातस्य रोषसन्देहो न कर्त्तव्य इति भावः।

(চ) অনসূয়া। আমার নিকট যে রূপ জিজ্ঞাসা করিতেছ, পিতার সেইরূপই মত।

(ছ) প্রিয়ংবদা। কি রূপ ?।

(জ) অনসূয়া। কন্যাকে অনুরূপ বরের হাতে দিতে হইবে ইহাই প্রথম কল্প; তাহা যদি বিধাতা সম্পাদন করিলেন, তবে ত গুরুজন চরিতার্থই হইলেন।

(१) अनसूया। जह अहं देक्खामि तह तस्स अणुमदं होउ।

(२) अनसूया। गुणअणस्स कण्णआ पडिवादणीअ त्ति अअं दाव पढमो संकप्पो। तं जइ देव्वं एव्व संपादेइ, णं अप्पआसेण कअत्थो गुरुअणो।

प्रियं। एवम्भेदं। पुष्पभाजनं विलोक्य। सहि! अव-चिंदाइं क्खु बलिकम्मपज्जत्ताइं कुसुमाइं (१)। (झ)

अन। णं सउन्तलाए वि सोहग्गदेवदाओ अच्चिदव्वाओ, ता अवराइं वि अवचिणुह्म (२)। (ञ)

प्रियं। जुज्जदि। इति तदेव कर्म्माभिनयतः (३)। (ट)

(झ) एवमेतत्। सखि! अवचितानि खलु बलिकर्म्मपर्य्याप्तानि कुसुमानि।

(ञ) ननु शकुन्तलाया अपि सौभाग्यदेवता अर्च्चितव्याः तदपराण्यपि अवचिनुवः।

(ट) युज्यते।

(झ) प्रियमिति। एवमेतत् त्वया यदुक्तं तत् सत्यमेवेत्यर्थः। पुष्पभाजनं हस्तधृतं पुष्पपात्रम्, विलोक्य कियन्ति पुष्पाणि सञ्चितानीति दृष्ट्वा। बलिकर्म्मपर्य्याप्तानि पूजोपहारकार्य्योपयुक्तानि। अत एतदधिकपुष्पचयनप्रयोजनाभावात् इदानीमावयो-र्गमनमेवोचितमिति भावः।

"कामं प्रकामं पर्य्याप्तं निकामेष्टं यथेप्सितम्" इत्यमरः।

(ञ) अनेति। नन्विति सम्बोधने। सौभाग्यदेवता भर्त्तृप्रियत्वसम्पादिका देवता मङ्गलचण्डिकाप्रभृतयः। अपराण्यपि पुष्पाणि।

(ঝ) প্রিয়ংবদা। তাহা সত্য বটে। (পুষ্পপাত্র দেখিয়া) সখি! পূজার উপযুক্ত ফুল তোলা হইয়াছে।

(ঞ) অনসূয়া। শকুন্তলার সৌভাগ্যদেবতারও ত পূজা করিতে হইবে; তা আরও ফুল তুলি।

(ট) প্রিয়ংবদা। সঙ্গত বটে। (এই বলিয়া উভয়ে পুষ্পচয়নই অভিনয় করিতে লাগিল।)

(१) प्रियंवदा। पुष्पभाजनं विलोक्य। सहि! अवचिदाइं बलिकम्मपज्ज-त्ताइं कुसुमाइं। (२) णं पिअसहीए सउन्तलाए सोहग्गदेवदा अच्चणीआ।

(३) जुज्जइ। तदेव कर्म्मारभेते।

नेपथ्ये। अयमहं भोः!। (ठ)

अन। कर्णं दत्त्वा। सहि! अदिधिणा विअ णिवेदिदं (१)। (ड)

प्रिय। णं उडए सण्णिहिदा सउन्तला (२)। (ढ)

अन। आं, अज्ज उण असण्णिहिदा हिअएण। तेण हि भोदु, एत्तिकेहिं कुसुमेहिं पओअणं (३)। इति प्रस्थिते। (ण)

(ड) सखि! अतिथिना इव निवेदितम्।

(ढ) ननु उटजे सन्निहिता शकुन्तला।

(ण) आं, अद्य पुनरसन्निहिता हृदयेन। तेन हि भवतु, एतावद्भिः कुसुमैः प्रयोजनम्।

(ट) प्रियमिति। युज्यते त्वदुक्तिरिति शेषः। तदेव पुष्पचयननेव।

(ठ) नेपथ्य इति। दुर्वासस उक्तिरियम्।

(ड) अनेति। निवेदितं विज्ञापितं निजागमनमिति शेषः। अतएव आवयोरेकतरस्यात्र गमनमावश्यकमित्याशयः।

(ढ) प्रियमिति। उटजे पर्णशालायाम्, सन्निहिता उपस्थिता। अतः सैव अतिथिमभ्यर्थयिष्यतीति नावयोः कस्याश्चिदत्र गमनावश्यकतेति भावः।

(ण) अनेति। आमिति अरणार्थमव्ययम्। पुनः किन्तु शरीरेण उटजे

(ঠ) নেপথ্যে। ওহে! এই আমি উপস্থিত হইয়াছি।

(ড) অনসূয়া। (কাণ দিয়া) সখি! অতিথি যেন জানাইলেন।

(ঢ) প্রিয়ংবদা। পর্ণশালায় শকুন্তলাই রহিয়াছে।

(१)···अदिहिणा विअ।

(२) णं उडअसण्णिहिआ सउन्तला। आत्मगतम्। अज्ज उण हिअएण असण्णिआ।

(३) अनसूया। होदु, अलं एत्तिएहिं कुसुमेहिं। प्रस्थिते।

पुनर्नेपथ्ये। आः, कथमतिथिं मां परिभवसि (१)। (त)

विचिन्तयन्ती यमनन्यमानसा
तपोनिधिं वेत्सि न मामुपस्थितम् (२)।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ॥१॥

सन्निहिता, किन्तु हृदयेन असन्निहिता, हृदयस्य भर्तृसमीपे प्रस्थानादिति भावः। तेन हि उटजस्य जनशून्यत्वेनैव हेतुना। प्रयोजनं भवतु सिद्धं भवत्वित्यर्थः। प्रस्थिते प्रस्थातुमारभेते। आदिकर्म्मणि क्तः।

(त) पुनरिति। इयमपि नेपथ्यात् दुर्वाससः उक्तिः। आ इति कोपव्यञ्जक-मव्ययम्। परिभवसि वचनोदक्षणात् नाद्रियसे; इदमत्यन्तमनुचितमित्याशयः।

"आस्तु स्यात् कोपपीडयोः" "अनादरः परिभवः" इति चामरः।

विचिन्तयन्तीति। न विद्यते अन्यस्मिन् दुष्मन्तभिन्ने विषये मानसं मनो यस्याः सा तादृशी त्वम्, यं जनम्, विचिन्तयन्ती विशेषेण भावयन्ती सती, उपस्थितं समभ्यागतम्, तपोनिधिं तपसामाधारम्, एतेनात्मनोऽतिमहत्त्वम् अनादरे दोषाधिकत्वञ्च व्यज्यते; मा दुर्वाससम्, न वेत्सि महर्षित्वेन न जानासि, प्रमत्तः अनवधानो जनः, प्रथमं कृतामभिहिताम्, कथां वाचमिव, स जनः बोधितोऽपि आत्मस्मरणे जनितबुद्धिरपि सन्, त्वाम्, न स्मरिष्यति। ममानादरणकरणस्य अयमेव दण्डो मया दत्तः, यत्स्मरणेन ममास्मरणं तत्कर्त्तृकनिजास्मरणदण्डस्यौचित्यादिति भावः।

---

(ণ) অনসূয়া। ও! আজ সে মনদ্বারা সন্নিহিত নাই। অতএব এইগুলিতেই প্রয়োজন সিদ্ধ হইবে। (এই বলিয়া প্রস্থান করিতে লাগিল।)

(ত) পুনরায় নেপথ্যে। আঃ! আমি অতিথি, আমাকে অনাদর করিতেছিস্।

(१) नेपथ्ये। आः, अतिथिपरिभाविनि!। (२)···तपोधनं वेत्सि।

প্রিয়ং। হদ্ধী হদ্ধী! তং জ্জেব সংবুত্তং, জং মএ চিন্তিদং। কস্সিং পি পূআরিহে অবরদ্ধা সুণ্ণহিঅআ সউন্তলা (১)। (থ)

(থ) হাধিক্ হাধিক্! তদেব সংবৃত্তম্, যন্ময়া চিন্তিতম্। কস্মিন্নপি পূজার্হে অপরাদ্ধা শূন্যহৃদয়া শকুন্তলা।

অত্র পূর্ণোপমালঙ্কারঃ।

ননু "বিবাহো ভোজনং শাপোৎসর্গৌ মৃত্যু রতং তথা" ইত্যাদিনা দর্পণকৃদাদিভিঃ শাপনিষেধাৎ কথমত্র কবিনা শাপো নিবদ্ধ ইতি চেন্ন দর্পণকৃদাদিভিরুক্তবিধবচনেন বিষ্কম্ভকেতরস্থল এব শাপনিবন্ধননিষেধস্যৈবাভিপ্রেতত্বাৎ, অস্য তু বিষ্কম্ভকান্তর্গতত্বাৎ, অন্যথা "শাপাদ্যৈঃ সান্তরায়শ্চ স বিমর্ষ ইতি স্মৃতঃ" ইতি দর্পণকৃদাদ্যুক্তবিমর্ষসন্ধিলক্ষণস্যৈবাসঙ্গতেরিতি সুধীভির্বিভাবনীয়ম্।

বংশস্থবিলং বৃত্তম্ ॥১॥

(থ) প্রিয়মিতি। হাধিগিতি মহাবিষাদে, তস্যাতিশয্যে দ্বিরুক্তিঃ। সংবৃত্তং সঞ্জাতম্। চিন্তিতমাশঙ্কিতম্। পূজার্হে সম্মানযোগ্যে, কস্মিন্নপি জনে, শূন্যহৃদয়স্য পতিগতত্বাৎ তদ্বিরহিতেব, অতএব অপরাদ্ধা সম্মানাকরণাৎ কৃতাপরাধা। ইদানীং কা গতিরিত্যাশয়ঃ।

তুই অনন্য মনে যাহাকে চিন্তা করতঃ, উপস্থিত তপোনিধি আমাকে জানিতে পারিতেছিস্ না; অস্থিরচিত্ত ব্যক্তি যেমন প্রথম উক্ত কথা স্মরণ করে না, সেইরূপ সে ব্যক্তিকে বুঝাইলেও সে তোকে স্মরণ করিবে না ॥১॥

(১) প্রিয়ংবদা। হদ্ধী হদ্ধী, অপ্পিঅং এব্ব সংবুত্তং। কস্সিং বি পূআরিহে অবরদ্ধা সুণ্ণহিঅআ সউন্তলা। (পুরোঽবলোক্য) ণহু জস্সিং কস্সিং বি। এসো দুব্বাসো সুলহকোবো মহেসী। তহ অবিঅ বেঅবলোপ্‌ফুল্লাএ দুব্বারাএ গদীএ পড়িণিউত্তো। কো অণ্ণো হুদবহাদো দহিউং পভবিস্সদি।

अन। पुरोऽवलोक्य। ण क्खु जस्सिं कस्सिं पि, एसो दुव्वासा सुलहकोवो महेसी, तधा सविअ अविरलपाददुवराए गदीए पड़िणिउत्तो। (द)

प्रियं। को अस्सो हुदवहादो पहवदि दहिदुं। ता गच्छ पाएसुं पड़िअ णिउत्तावेहि। जाव से अहं पि अग्घोदअं उवकप्पेमि (१)। (ध)

(द) न खलु यस्मिन् कस्मिन्नपि, एष दुर्वासाः सुलभकोपो महर्षिः, तथा शप्ता अविरलपादत्वरया गत्या प्रतिनिवृत्तः।

(ध) कोऽन्यो हुतवहात् प्रभवति दग्धुम्। तद्गच्छ, पादयोः पतित्वा निवर्त्तय। यावदस्याहमपि अर्घोदकमुपकल्पयामि।

(द) अनेति। पुरः सम्मुखदेशे, अवलोक्य शापकर्त्तारं दुर्वाससं दृष्ट्वा। यस्मिन् कस्मिन्नपि साधारणजने इत्यर्थः, न खलु शकुन्तला अपराद्धा इति पूर्वेणान्वयः। सुलभः अनायासप्राप्यः सहसैवोत्पादीत्यर्थः कोपो यस्य सः, तथा विचिन्तयन्तीत्यादिरूपेण, शप्ता अभिसम्पातं कृत्वा, अविरला घनाः पादाः पादन्यासा यस्यां सा तादृशी त्वरा यस्यां सा तया, गत्या गमनेन, प्रतिनिवृत्तः आश्रमाद्बहिर्मुखो भूतः।

(ध) प्रियमिति। हुतवहादग्नेः अन्यः कः पदार्थः, दग्धुं प्रभवति शक्नोति अपि

(থ) প্রিয়ংবদা। হায় হায়! যাহা আমি ভাবিয়াছিলাম, তাহাই হইল। শূন্যহৃদয়া শকুন্তলা, পূজার যোগ্য কোনও ব্যক্তির নিকট অপরাধ করিয়াছে।

(দ) অনসূয়া। (সম্মুখের দিকে দৃষ্টিপাত করিয়া) যে কোন ব্যক্তির নিকটে নহে; ইনি সুলভকোপ মহর্ষি দুর্বাসা, সেইরূপ অভিসম্পাত করিয়া ঘন ঘন পাদক্ষেপে শীঘ্র গতিতে ফিরিয়াছেন।

(१) अनसूया। गच्छ, पाएसु पणमिअ णिवत्तेसु णं जाव। अहं अग्घोदअं उवकप्पेमि।

अन। तह। इति निष्क्रान्ता (१)। (न)

प्रियं। पदान्तरे स्खलितं रूपयन्ती। अम्मो! आवेअक्खलिदाए गदीए परिब्भट्टं मे अग्गहत्थादो पुप्फभाअणं। इति पुष्पावचयं रूपयति (२)। (प)

(न) तथा।

(प) अहो! आवेगस्खलितया गत्या परिभ्रष्टं मे अग्रहस्तात् पुष्पभाजनम्।

---

तु कोऽपि नेत्यर्थः। दुर्वाससमन्तरेण ईदृशं क्षुद्रदोषात् दारुणशापं दातुमन्यो नार्हतीत्याशयः। अतएवात्र समादप्रस्तुतात् प्रस्तुतसमप्रतीतेरप्रस्तुतप्रशंसालङ्कारः। निवर्त्तय दुर्वाससमिति शेषः। अस्य दुर्वाससः सम्बन्धे।

(न) तथेति। तथा त्वया यदुक्तं तथैव करोमीत्यर्थः।

(प) प्रियमिति। पदान्तरे उटजगमनाय एकपदं क्षिप्त्वा द्वितीयपदक्षेपे, स्खलितं पदोत्स्खलनम्, रूपयन्ती अभिनयन्ती। आवेगेन त्वरया स्खलिता विपर्यस्ता तया। अग्रहस्तात् हस्ताग्रात्।

---

(ধ) প্রিয়ংবদা। অগ্নিভিন্ন কোন্ বস্তু, দগ্ধ করিতে পারে? অতএব যাও, পায়ে পড়িয়া ফিরাও। আমিও তাঁহার জন্য অর্ঘ্য ও পাদোদক সংগ্রহ করি।

(ন) অনসূয়া। তাহাই। (এই বলিয়া চলিয়া গেল।)

(প) প্রিয়ংবদা। (দ্বিতীয় বার পা ফেলিবার সময়ে হুচট্ খাওয়া অভিনয় করিয়া) ওমা! বেগবশতঃ গমন বিপর্য্যস্ত হওয়ায় আমার হস্তাগ্র হইতে পুষ্পপাত্র পড়িয়া গেল। (এই বলিয়া সেই পুষ্পসংগ্রহ অভিনয় করিতে লাগিল।)

---

(१) प्रियंवदा। तह। निष्क्रान्ता।

(२) अनसूया। पदान्तरे स्खलितं निरूप्य। पब्भट्टं। पुष्पोच्चयं रूपयति।

अन। प्रविश्य। सहि! सरीरी विअ कोवो कस्स अणुणअं सो गेण्हदि। किन्तु, उण सो अणुकम्पिदो मए (१)। (फ)

प्रियं। एदं ज्जेव तस्सिं वहुदरं। ता कधेहि कधं तए पसादिदो? (२)। (ब)

अन। जदो णिउत्तिदुं ण इच्छदि, तदो पाएसुं पड़िअ विण्णविदो मए, भअवं पढ़मं त्ति पेक्खिअ अविसाद-तव-

(फ) सखि! शरीरीव कोपः कस्य अनुनयं स गृह्णाति। किन्तु, पुनः सः अनुकम्पितो मया।

(ब) एतदेव तस्मिन् बहुतरम्। तत् कथय कथं त्वया प्रसादितः।

(फ) अनेति। शरीरी मूर्त्तिमान्। कोप इव स दुर्वासाः, कस्य जनस्य, अनुनयम् अवनतभावम्, गृह्णाति अङ्गीकरोति, कस्यापि नेत्यर्थः। तर्हि किं विफल-मनोरथा जातासीत्याह किन्त्विति। स दुर्वासाः, मया अनुकम्पितः अनुकम्पां दयां कारितः।

(ब) प्रियमिति। एतदेव अनुकम्पाजननमेव, तस्मिन् दुर्वाससि, बहुतरमधिकं मन्तव्यम्, निवर्त्तनन्त्वशक्यमेवेति भावः। प्रसादितः प्रसादं कारितः।

(ফ) অনসূয়া। (প্রবেশ করিয়া) সখি! মূর্ত্তিমান্ ক্রোধের ন্যায় তিনি, কাহার অনুনয় গ্রাহ্য করেন; তথাপি আমি তাঁহার দয়া জন্মাইয়াছি।

(ব) প্রিয়ংবদা। তাঁহার নিকট ইহাই বেশী। তা বল দেখি, কি করিয়া তুমি প্রসন্ন করিলে?।

(१) प्रविश्य प्रियंवदा। सहि! पकिदिवक्को सो कस्स अणुणअं गेण्हइ। किं वि उण साणुक्कोसो किदो।

(२) अनसूया। संस्कृतम्। तस्सिं वहु एदं वि। कहेसु।

प्पहावस्स दुहिदिजणस्स अअं अवराहो भअदा मरिसिदव्वो त्ति (१)। (भ)

प्रियं। तदो तदो? (२)। (म)

अन। तदो तेण भणिदं ण मे वअणं अण्णधा भविदुं अरिहदि। किन्तु आहरणाहिण्णाणदंसणेण से सावो णिउत्तिस्सदि त्ति मन्तअन्त ज्जेव अन्तरिदो (३)। (य)

(भ) यदा निवर्त्तितुं न इच्छति, तदा पादयो: पतित्वा विज्ञापितो मया, भगवन्! प्रथममिति प्रेक्ष्य अविज्ञाततप:प्रभावस्य दुहितृजनस्य अयमपराधो भवता मर्षयितव्य इति।

(म) ततस्तत:?।

(भ) अनेति। निवर्त्तितुम् उटजमागन्तुम्। प्रथमम् इदमाद्यं शकुन्तलाया अपराद्धम्, इति प्रेक्ष्य पर्यालोच्य. प्रायेण लोक: प्रथमं वस्तुस्वभावमबुद्धा अपराध्यति, परोऽपि तदविवेकपूर्वकमिति मत्वा मर्षयतीति लोकव्यवहारदर्शनादित्याशय:; न विज्ञातस्तप:प्रभावो येन तस्य, दुहितृजनस्य आत्मजातुल्यस्य शकुन्तलाया इत्यर्थ:। मर्षयितव्य: क्षन्तव्य:।

अत्र परिहारो नाम नाट्यालङ्कार:। यथा दर्पणे—

"परिहार इति प्रोक्त: कृतानुचितमार्जनम।"

(ভ) অনসূয়া। যখন ফিরিতে ইচ্ছা করিলেন না, তখন পায়ের উপর পড়িয়া আমি জানাইলাম—"ভগবন্! ইহা প্রথম অপরাধ এইরূপ মনে করিয়া, তপঃপ্রভাবানভিজ্ঞ কন্যাজনের এই অপরাধ আপনি মার্জ্জনা করুন।"

(१) तदा तदा विज्ञविदो मए भअवदा एक्को अवराहो। (२) अन। तदो तदो?।

(३) प्रियंवदा। तदो मे वअणं अण्णहा भविदुं ण अरिहदि। किन्तु अहिण्णाभरणदंसणेण सावो णिवत्तिस्सदि त्ति मन्तअन्तो सअं अन्तरिहिदो।

प्रियं। सक्कं दाणिं समास्ससिदुं। अत्थि तेण राएसिणा संपत्थिदेण अत्तणो णामाङ्किदं अङ्गुलीअअं सुमरणीअं त्ति सउन्तलाए हत्थे सअं ज्जेव परिधाविदं। एसो ज्जेव तस्सिं साहीणो उवाओ भविस्सदि (१)। (र)

(य) ततस्तेन भणितम्, न मे वचनमन्यथा भवितुमर्हति। किन्तु आभरणाभिज्ञानदर्शनेन अस्याः शापो निवर्त्तिष्यतीति मन्त्रयन्नेवान्तरितः।

(र) शक्यमिदानीं समाश्वसितुम्। अस्ति तेन राजर्षिणा संप्रस्थितेन आत्मनो नामाङ्कितमङ्गुलीयकं स्मरणीयमिति शकुन्तलाया हस्ते स्वयमेव परिधापितम्। एष एव तस्मिन् स्वाधीन उपायो भविष्यति।

(य) अनेति। तेन दुर्वाससा। अन्यथा मिथ्या। अभिज्ञायते परिचीयते अनेनेति अभिज्ञानं चिह्नम्, आभरणम् अलङ्करणमेव अभिज्ञानं तस्य दर्शनेन प्रदर्शनया अस्याः शकुन्तलायाः। मन्त्रयन्नेव वदन्नेव, अन्तरितः अन्तर्हितवान्।

(र) प्रियमिति। शक्यमस्माभिरिति शेषः। राजर्षिणा दुष्मन्तेन, सम्प्रस्थितेन आदिकर्म्मणि क्तप्रत्ययात् प्रस्थातुमारभमाणेन सता, आत्मनो दुष्मन्तस्यैव। स्मरणाय हितं स्मरणीयं स्मृतिजनकमित्यर्थः। तस्मिन् शापनिवर्त्तने, स्वाधीनः अनन्यापेक्षः।

(ল) প্রিয়ংবদা। তার পর তার পর ?।

(য) অনসূয়া। তার পর তিনি বলিলেন—"আমার বাক্য মিথ্যা হইতে পারে না, তবে অলঙ্কাররূপ চিহ্ন দেখাইলে পর উহার শাপ নিবৃত্তি পাইবে" এই কথা বলিতে বলিতেই অন্তর্হিত হইলেন।

(র) প্রিয়ংবদা। এখন আশ্বস্ত হইতে পারিব। সেই রাজর্ষি, যাইবার সময়, নিজের নামাঙ্কিত একটী অঙ্গুরী, নিজেই শকুন্তলার হাতে স্মরণার্থ পরাইয়া দিয়াছিলেন, তাহা আছে। এই অঙ্গুরী দেখানই শাপনিবৃত্তির স্বাধীন উপায় হইবে।

(१) सणामहे अङ्किदं सअं पिणद्धं तस्सिं साहीणोवाआ सउन्तला होहिइ।

